श्रीजैनयशोविजयग्रन्थमाला (१)

॥ श्रीः ॥



श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालो-कालङ्कारः ।

श्रीकाशीस्थ न्यायविशारद महामहोपाध्याय
श्रीयशोविजय नामाङ्कित श्वेताम्बर जैन
संस्कृत पाठशालातः प्रादुर्भूतः

काश्यां
चन्द्रप्रभायन्त्रागारे मुद्रितश्च
वीर सं० २४३० सन १९०४





पायं पायं प्रवचनसुधां प्रीयते या प्रकामं
स्वैरं स्वैरं चरति कृतिनां कीर्तिवल्लीवनेषु
दोग्ध्री कामाननवरसैः सा भृशं प्रीणयन्ती
मादृग् वत्सान् जयति जगति श्रीगवीदेवसूरेः
"श्रीरत्नप्रभाचार्यः"

अर्हम्

# प्रस्तावना ।

---:o:---

अथास्यां संसृतिसरण्यां समागत्य सर्वे शरीरिणः शान्तिशकलमप्यनासादयन्तः समयसरीसृपशीर्णाः संसारापारपारावारपारमुपसर्तुमपारयन्तः परमपारमार्थिकपदमपि पुण्यपद्यया प्राप्तुमपारमार्थिकं मन्वानाः क्षोदिष्ठप्रज्ञया सर्वाऽवज्ञया च पाञ्चभौतिकपिण्डप्रेष्ठाः कलिकल्मषकालिमकलङ्कद्राघिष्ठा विषमविषविषयाशीविषदष्टविशीर्णविषस्फेष्ठाः किंवा विषकीटा इव विषयविषभुजो ऽनादिदुर्वासनावासितबुद्धयश्चाहमहमिकामेव परमपुरुषार्थं साधिष्ठमाकलयन्तोवालिताश्च गरिष्ठाहोपुरुषिकया प्रत्यहं पितृवने दीर्घनिद्रासुखमनुभवन्तः क्रियासमभिहारेण ह्रसिष्ठजननीजठरे वसन्तः सांसारिकानेकवंहिष्ठकटुक्लेशपाशिताः सुप्तप्रबुद्धा इव प्रबुद्धसुप्ता इव तिष्ठन्ति ।

तदत्र किं कारणं को हेतुः किं प्रयोजनं कस्मादित्थमिति साम्रेडितप्रश्नावसरे सर्वमेतदविद्याविलाससाम्राज्येनेति वारं वारं वयमुत्तरयामः ।

हंहो त्रिलक्षणशेमुषीका विचक्षणाः! शुभवन्तोभवन्तः सहृदयहृदयसन्तोषप्रदन्तोषितरसज्ञ रसज्ञा रस ज्ञापितं कर्ण्य-तांवहत्किमपि श्वःश्रेयसमिदमाकर्ण्य नीरक्षीरविवेचनविलक्ष-णचेतनाचातुरीचमत्कारचमत्कृताः सकृदप्योमिति ब्रूयुः ।

अविद्यानिरासार्थमेव प्रयतमानैरस्माभिः श्रीजैनयशोविजय-ग्रन्थमाला ऽनर्घ्यमणिगणगुम्फिता हारभूतेव भवतां श्रीमता-मुपहारीयते ।

तस्यामेकेयं मणीरामायिता प्रमाणनयतत्वालोकालङ्कार-रूपा सर्वोपरि सुमेरुभूतेव विलसति ।

अमुं ग्रन्थं श्री १०८ सुगृहीतनाम्नोवादिप्रवरदेवसूरेर्मु-खाम्भोजनिर्गलितामृतधाराऽऽसारमिव प्रमाणनयतत्वालोका-लङ्कारमदृष्टपूर्वं जैनमतमन्तव्यप्रमाणविचारकरं दुर्वादिवाद-वासनानिर्यातनपरं विलक्षणभङ्गीकं सप्तभङ्गीतरङ्गरिङ्गितं निबन्धं निरीक्ष्य किमिदं कथमिदं कस्येदं कीदृक्षमिदमिति स्वभावेनैव जिज्ञासवः संपत्स्यन्ते तत्त्वग्रहाग्रहग्रहिलाः शास्त्र-प्रियाग्रियास्तदत्रावश्यकं किञ्चनोपन्यस्तुम् ।

तत्र प्रथममवधेयं धीमद्धौरेयैस्तत्रभवद्भिः, यत्कस्यापि मतस्य तत्त्वमनाकलय्य खण्डनमण्डनबद्धपरिकरा ये यथा-

जाताः सलभा इव परिपतन्ति ते लभन्ते न स्वात्माविना शाद्दते किञ्चिदपि भावुकम् ।

श्रीवादिदेवसूरिभगवतोऽन्तेवासी श्रीरत्नप्रभसूरिर्वसुलोकार्क १२३८ मिते विक्रमाब्दे निजानिर्मितोपदेशमालाटीकायामेवं व्यलेखीत् ।

शिष्यः श्रीमुनिचन्द्रसूरिमुनिभिर्गीतार्थचूडामणिः
पट्टे स्वे विनिवेशितस्तदनु स श्रीदेवसूरिप्रभुः ।
अस्थाने जयसिंहदेवनृपतेर्येनास्तादिग्वाससा
स्त्रीनिर्वाणसमर्थनेन विजयस्तम्भः समुत्तम्भितः ॥

तत्पट्टप्रभवोभवन्नथ गुणग्रामाभिरामोदयाः
श्रीभद्रेश्वरसूरयः शुचिधियस्तन्मानसप्रीतये ।
श्रीरत्नप्रभसूरिभिः शुभकृते श्रीदेवसूरिप्रभोः
शिष्यैः सेयमकारि संमदकृते वृत्तिर्विशेषार्थिनाम् ॥

तथा च ।

विक्रमाद् वसुलोकार्क १२३८ वर्षे माघे समर्थिता
एकादश सहस्राणि मानं सार्धं शतं तथा ॥११५०

अस्माद् श्रीरत्नप्रभसूरेः समयः स्फुटमेवावभाति—

किञ्च किञ्चिन्न्यूनाधिकः सएव समयस्तदीयगुरोर्देव सूरेरपि चास्मादेवानिर्णेतुं शक्यस्तथापि दुर्बद्धं सुबद्धमिति न्यायेन पुनः प्रमाणान्तरं प्रदर्श्यते ।

श्रीमुनिसुन्दरसूरिणा रसर्तुमनुमिते १४६६ ऽब्दे *गुर्वावल्यामेवं व्यलेखि ।

अष्टहयेशमिते ऽब्दे ११७८ विक्रमकालाद्दिवं गतोभगवान ।
श्रीमुनिचन्द्रमुनीन्द्रो ददातु भद्राणि संघाय ॥ ७१ ॥

तस्मादभूदजितदेवगुरुर्गरीयान्
प्राच्यस्तपः श्रुतिनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो
वादीश्वरोऽस्तगुणचन्द्रमदोपि बाल्ये ॥ ७२ ॥

येनार्दितश्चतुरसीतिसुवादिलीला-
लब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः
श्रीसिद्धभूमिपतिसंसादि पत्तनेऽस्मिन् ॥ ७३ ॥

वेदमुनीशमिते ११७४ ऽब्दे देवगुरुर्जगदनुत्तरोभ्युदितः ।
श्रीमुनिचन्द्रगुरोरिति शिष्या बहवोभवन् विदिताः ७४॥

* रसरसमनुमितवर्षे १४६६ मुनिसुन्दरसूरिणा कृतापूर्वम् ।
मध्यस्थैरवधार्या गुर्वावलीयं जयश्रीद्धा ॥ ८३ ॥

अस्मादपि स्फुटतरःसमयोदी पवद्देदीप्यते ।

श्रीपूज्यपाददेवसूरिरेव प्रमाणनयतत्वालोकालङ्कारस्य रत्नाकरनाम्नीं महाव्याख्यां रचितवान् ।

तद् विषयेऽपि गुर्वावल्यां लिखितमास्ति—

**स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां नहि देवसूरिः।**
**यतश्चतुर्विंशतिसूरिशाखं यस्यैव नाम्ना विदितं बभूव ७४**

देवसूरिशिष्यैः श्रीरत्नप्रभसूरिभिर्नातिलघीयसी रत्नाकरावतारिका नाम्नी टीका विनिर्मितास्ति । या मूलटिप्पणपञ्जिकाभिः सहिता मुद्रणालये मुद्रयितुमारब्धा तस्यामेवं लिलेख श्रीरत्नप्रभः ।

**यैरत्र स्वप्रभया दिगम्बरस्यार्पिता परा भूतिः ।**
**प्रत्यक्षं विबुधानां जयन्तु ते देवसूरयोनव्याः ॥ ३ ॥**

अस्मादपि स्फुटतमः समयो श्रीधर्मसागरोपाध्यायैस्तपगच्छपट्टावल्यां प्राकाश्यमानीतः । तथा श्रीमुनिचन्द्रसूरिशिष्याः॥ श्रीअजितदेवसूरिवादिश्रीदेवसूरिप्रभृतयः। तत्र वादिश्रीदेवसूरिभिः श्रीमदणहिल्लपुरपत्तने जयसिंहदेवराजस्याऽनेकाविद्वज्जनकालितायां सभायां चतुरशीतिवादलब्धजययशसं दिगम्बरचक्रवर्त्तिनं वादलिप्सुं

कुमुदचन्द्राचार्यं वादे निर्जित्य श्रीपत्तने दिगम्बरप्रवेशो निवारितोऽद्यापि प्रतीतः। तथा वि० चतुरधिकद्वादशशत १२०४ वर्षे फलवर्द्धिग्रामे चैत्यबिम्बयोः प्रतिष्ठाकृता तत्तीर्थन्तु सम्प्रत्यपि प्रसिद्धं। तथा आरासणे च श्रीनेमिनाथप्रतिष्ठाकृता। चतुरशीति सहस्र ८४००० प्रमाणः स्याद्वादरत्नाकरनामा प्रमाणग्रन्थः कृतः । येभ्यश्च यन्नाम्नैव ख्यातिमत् चतुर्विंशतिसूरिशाखं बभूव । एषां च वि० चतुस्त्रिंशदधिके एकादशशत ११३४ वर्षे जन्म द्विपञ्चाशदधिके ११५२ दीक्षा । चतुःसप्तत्यधिके ११७४ सूरिपदं । षड्विंशत्याधिकद्वादशशत १२२६ वर्षे श्रावणवदिसप्तम्यां ७ गुरौ स्वर्गः ।

प्रभावकचरित्रेऽप्येवं श्रीप्रद्युम्नसूरिभिः समयनिर्णयः कृतः ।

वेदशिखिशिवे जन्म दीक्षा युग्मशरेश्वरे। वेदाश्वशंकरे वर्षे सूरित्वमभवत्प्रभोः ॥ रसयुग्मरवौ वर्षे श्रावणे मासि संगते । कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने ॥ मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरन्दरबोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः ॥

Similarly, the following passage occurs in "Extracts from the Historical Records of the Jains by Johannes Klatt Ph. D. of Berlin" published in the Indian Antiquary of September 1882:—

A pupil of Munichandra was Dêvasûri, who conquered the Digambara Kumudachandrâchârya in a dispute before Jayasimhadêva, king of Anahillapurapattana, and thereby hindered the entrance

of the Digambaras into that town. In Saṁ. 1204 Dêvasûri founded a chaitya and raised a *bimba* at Phalavarddhigrâma ( तत्तीर्थं संप्रत्यपि प्रसिद्धं ), and made a Nêminâthapratishṭhâ at Ârâsana. He composed *Syâdvâdaratnâkarâ*, a *pramâṇagrantha*, from whence sprang the *Chaturviṁśatisûriśâkhâ*. Dêvasûri was born Sam. 1134; *dîkshâ* 1152; *sûripada* 1174; *svarga* 1226 Śrâvana vadi 7 Gurau.

श्रीमल्लधारिराजशेखरसूरिणा पञ्जिकाकारेणापि लिखितमस्ति ।

स्याद्वादरत्नाकर इत्यस्ति ग्रन्थोमहत्तमः ।
वादिवृन्दारकश्रीमद्देवसूरिविनिर्मितः ॥ ४ ॥

न्यायशास्त्रस्यायमद्वितीयोग्रन्थः

**अत्राष्टौ परिच्छेदाः सन्ति ।**

तत्र प्रथमपरिच्छेदे–प्रमाणस्वरूपनिर्णयः ।
द्वितीये परिच्छेदे–प्रत्यक्षस्वरूपनिर्णयः ।
तृतीयपरिच्छेदे–स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयः
चतुर्थपरिच्छेदे–आगमाख्यप्रमाणस्वरूपनिर्णयः ।
पञ्चमपरिच्छेदे–विषयस्वरूपनिर्णयः ।
षष्ठपरिच्छेदे–फलप्रमाणस्वरूपाद्याभासनिर्णयः ।
सप्तमपरिच्छेदे–नयात्मस्वरूपनिर्णयः ।

अष्टमपरिच्छेदे—वादिप्रवादिन्यायनिर्णयः ।

एतद्ग्रन्थमुद्रणावसरे पञ्चषाणि पुस्तकानि प्राप्तानि, तेषांमध्ये

१ श्री महामान्यधन्यतम धर्मविजयमुनीन्द्रतो लब्धमेकं पुस्तकम् ।

२ श्री मुनिराज वीरविजयेन दत्तमेकं पुस्तकम् ।

३ श्रीमुनिना अमिविजयेन महाशयेनापिपुस्तकमेकंसमर्पितम् ।

४ श्रीकेशरविजयमुनितोपि पुस्तकमेकं समासादितम् ।

५ भावनगरस्थश्राद्धवर्य्य कुंवरजी आनन्दजी इत्यनेन श्रावकेनात्र महती सहायता दत्ता ।

६ श्रीपं. अम्बादत्तशास्त्रिणां समीपेपुस्तमेकमाप्तम् ।

पूर्वोक्तमहाशयानां भूयांसं परिश्रमं चोपकृतिं च तेषां सप्रश्रयमङ्गीकरोतीयं पाठशाला ।

यद्यपि पूर्वोक्तानि पुस्तकानि दृष्ट्वा शोधितोयं ग्रन्थस्तथापि मनुष्यसहभूर्भ्रान्तिर्दुर्वारा तदत्र दृष्टिदोषात् शीशाक्षरयोजनदोषाद् वा या काचना ऽशुद्धिर्भवेत् तत्स्वपुस्तके परिमृज्य कृपया पाठशालामपि सूचयेयुः सज्जनाः इतिप्रार्थयते

**काशीस्थजैनयशोविजयसंस्कृतपाठशाला ।**

॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

## प्रथमः परिच्छेदः ।

रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।
शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये ॥ १ ॥

प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते ॥ १ ॥

स्वपरव्यवसायिज्ञानं प्रमाणम् ॥ २ ॥

अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणमतोज्ञानमेवेदम् ॥ ३ ॥

नवै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नंत-

स्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतम-
त्वानुपपत्तेः ॥ ४ ॥

न खल्वस्य स्वनिर्णीतौ करणत्वं स्तंभादेरि-
वाचेतनत्वात् नाप्यर्थनिश्चितौ स्वनिश्चि-
तावकरणस्य कुंभादेरिवतत्राप्यकरणत्वात् ५॥

तद्व्यवसायस्वभावं समारोपपरिपन्थित्वात्
प्रमाणत्वाद्वा ॥ ६ ॥

अतस्मिँस्तदध्यवसायः समारोपः ॥ ७ ॥

स विपर्ययसंशयानध्यवसायभेदात्त्रेधा ॥८॥

विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥ ९ ॥

यथा शुक्तिकायामिदं रजतमिति ॥१०॥

साधकबाधकप्रमाणाभावादनवस्थिता-
नेककोटिसंस्पर्शिज्ञानं संशयः ॥ ११ ॥

यथाऽयं स्थाणुर्वा पुरुषोवेति ॥ १२ ॥

किमित्यालोचनमात्रमनध्यवसायः ॥१३॥

यथागच्छतस्तृणस्पर्शज्ञानम् ॥ १४॥

ज्ञानादन्योऽर्थः परः ॥ १५ ॥

स्वस्य व्यवसायःस्वाभिमुख्येन प्रकाशनं बाह्यस्येवतदाभिमुख्येन करिकलभकमहमात्मनाजानामीति ॥ १६ ॥

कः खलुज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपिनतूप्रकारं नाभिमन्येत मिहिरालोकवत् ॥ १७ ॥

ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम् १८॥

तदितरत्त्वप्रामाण्यम् ॥ १९ ॥

तदुभयमुत्पत्तौ परतएव ज्ञप्तौ तु स्वतः परतश्चेति ॥ २० ॥

श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

## अथ द्वितीयः परिच्छेदः

तद्द्विभेदं प्रत्यक्षं च परोक्षं च ॥ १ ॥
स्पष्टं प्रत्यक्षम् ॥ २ ॥
अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥ ३ ॥
तद्द्विप्रकारं सांव्यवहारिकं पारमार्थिकं च॥४॥
तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥ ५ ॥
एतद्द्वितयमवग्रहेहावायधारणाभेदादेकश[१]श्चतुर्विकल्पकम् ॥ ६ ॥
विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः ॥७॥
अवगृहीतार्थविशेषाकाङ्क्षणमीहा ॥८॥

१ 'एकैकश' इत्यपिपाठान्तरम् ।

ईहितविशेषनिर्णयोऽवायः ॥ ९ ॥

सएवदृढतमावस्थापन्नोधारणा ॥ १० ॥

संशयपूर्वकत्वादीहायाः संशयाद्भेदः ॥ ११ ॥

कथञ्चिदभेदेऽपिपरिणामविशेषादेषां व्यपदेशभेदः ॥ १२ ॥

असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतया ऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥ १३ ॥

क्रमोप्यमीषामयमेव तथैवसंवेदनात् ॥ १४ ॥

एवंक्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्च ॥ १५ ॥

अन्यथाप्रमेयानवगतिप्रसङ्गः ॥ १६ ॥

तथाहि नखल्वदृष्टमवगृह्यते नचानवगृहीतं-

सन्दिह्यते नचासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेतं धार्यते ॥ १७ ॥

क्वचित् क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १८ ॥

पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् १९॥

तद्विकलं सकलं च ॥ २० ॥

तत्र विकलमवधिमनःपर्यायज्ञानरूपतया द्वेधा ॥ २१ ॥

अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम् ॥ २२ ॥

संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् ॥ २३ ॥

सकलं तु सामग्रीविशेषतः समुद्भूतसमस्ताव-

रणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ॥२४॥

तद्वानर्हन्निर्दोषत्वात् ॥२५॥

निर्दोषोसौ प्रमाणाविरोधिवाक्त्वात् ॥२६॥

तदिष्टस्यप्रमाणेनाबाध्यमानत्वात् तद्वाचस्तेनाविरोधसिद्धिः ॥२७॥

नच कवलाहारवत्त्वेन तस्यासर्वज्ञत्वं कवलाहारसर्वज्ञत्वयोरविरोधात् ॥२८॥

इतिप्रत्यक्षस्वरूपनिर्णयोनाम द्वितीयः परिच्छेदः ॥ २ ॥

---

## अथ तृतीयः परिच्छेदः

:o:

अस्पष्टं परोक्षं स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चप्रकारं तत्रसंस्कारप्र-

बोधसंभूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम् ॥ १ ॥

तत्तीर्थकरबिम्बमिति यथा ॥ २ ॥

अनुभवस्मृतिहेतुकं तिर्यगूर्द्धतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम् ३

यथा तज्जातीयएवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि ॥ ४ ॥

उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन् सत्येवभवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ॥ ५ ॥

यथा यावान् कश्चित्धूमःस सर्वोवह्नौसत्येवभवतीति तस्मिन्नसत्यसौ नभवत्येवेति ६॥

अनुमानं द्विप्रकारं स्वार्थं परार्थं च ॥७॥

तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्य-
विज्ञानं स्वार्थम् ॥ ८ ॥

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ९ ॥

न तु त्रिलक्षणकादिः ॥ १० ॥

तस्य हेत्वाभासस्यापि सम्भवात् ॥ ११ ॥

अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १२ ॥

शङ्कितविपरीतानध्यवसितवस्तूनां साध्य-
ताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥ १३ ॥

प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यता-
मित्यनिराकृतग्रहणम् ॥ १४ ॥

अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सित-
पदोपादानम् ॥ १५ ॥

व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्य-
था तदनुपपत्तेः ॥ १६ ॥

नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव
धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥ १७॥

आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षाप-
रपर्यायस्तद्विशिष्टः प्रसिद्धोधर्म्मी ॥१८॥

धर्म्मिणः प्रसिद्धिः क्वचिद्विकल्पतः कुत्र-
चित्प्रमाणतःक्वापि विकल्पप्रमाणाभ्याम् १९

यथा समस्तिसमस्तवस्तुवेदी क्षितिधरकन्धरे-
यंधूमध्वजवती ध्वनिः परिणतिमानिति२०॥

पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारा-
त् ॥ २१ ॥

साध्यस्य प्रतिनियतधर्म्मिसंबन्धिता प्रसिद्ध-
ये हेतोरुपसंहारवचनवत्पक्षप्रयोगोप्यवश्य-
माश्रयितव्यः ॥ २२ ॥

त्रिविधं साधनमभिधायैव तत्समर्थनं विद-

धानः कः खलु न पक्षप्रयोगमङ्गीकुरुते॥२३॥

प्रत्यक्षपरिच्छिन्नार्थाभिधायिवचनं परार्थं प्रत्यक्षं परप्रत्यक्षहेतुत्वात् ॥ २४ ॥

यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति२५॥

पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनम् ॥ २६ ॥

हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः ॥ २७ ॥

सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः । असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः२८

यथा कृशानुमानयंपाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति२९

अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यैकत्रानुपयोगः ॥ ३० ॥

नदृष्टान्तवचनं परप्रतिपत्तये प्रभवति तस्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ३१

नच हेतोरन्यथानुपपत्तिनिर्णीतये यथोक्ततर्कप्रमाणादेव तदुपपत्तेः ॥ ३२ ॥

नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षायामनवस्थितेर्दुर्निवारः समवतारः ॥ ३३ ॥

नाप्यविनाभावस्मृतये प्रतिपन्नप्रतिबन्धस्य व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः

अन्तर्व्याप्त्या हेतोःसाध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥ ३५ ॥

पक्षीकृतएवविषये साधनस्य साध्येन व्याप्ति-

रन्तर्व्याप्तिरन्यत्रतुबहिर्व्याप्तिः यथाऽनैका न्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः । अग्नि-मानयं देशो धूमवत्त्वात् य एवं स एवं यथा पाकस्थानम् ॥ ३६ ॥

नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं-पक्षहेतुप्रयोगादेव तस्याः सद्भावात् ॥३७॥

समर्थनमेवपरंपरप्रतिपत्त्यङ्गमास्तां तदन्तरेण दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥३८॥

मन्दमतींस्तुव्युत्पादयितुं दृष्टान्तोपनयनि-गमनान्यपि प्रयोज्यानि ॥३९॥

प्रतिबन्धप्रतिपत्तेरास्पदं दृष्टान्तः ॥४०॥

स द्वेधा साधर्म्यतो वैधर्म्यतश्च ॥४१॥

यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता प्रकाश्यते स साधर्म्यदृष्टान्तः ॥ ४२ ॥

यथा यत्र धूमस्तत्र वह्निर्यथा महानसः ॥४३॥

यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते स वैधर्म्यदृष्टान्तः ॥ ४४ ॥

यथाग्न्यभावे न भवत्येव धूमो यथा जलाशये ४५

हेतोःसाध्यधर्मिण्युपसंहरणमुपनयः ॥४६॥

यथा धूमश्चात्र प्रदेशे ॥४७॥

साध्यधर्मस्य पुनर्निगमनम् ॥४८॥

यथा तस्मादग्निरत्र ॥४९॥

एते पक्षप्रयोगादयः पञ्चाप्यवयवसंज्ञया कीर्त्यन्ते ॥५०॥

उक्तलक्षणो हेतुर्द्विप्रकारःउपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५१॥

उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५२॥

विधिः सदंशः प्रतिषेधोऽसदंशः ॥५३॥

सचतुर्द्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥५४॥

यन्निवृत्तावेव कार्यस्यसमुत्पत्तिः सोऽस्यप्रागभावः ॥५५॥

यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥५६॥

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥५७॥

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥५८॥

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः ५९

यथा स्तंभस्वभावात् कुंभस्वभावव्यावृत्तिः ६०

कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः ॥६१॥

यथा चेतनाऽचेतनयोः ॥६२॥

उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च ॥ ६३ ॥

तत्राऽविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ६४॥

साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति॥६५॥

तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यञ्च ६६

पूर्वचरोत्तरचरयोर्न स्वभावकार्यकारणभावौ तयोः कालव्यवहितावनुपलम्भात्॥ ६७ ॥

नचातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोःप्रबोधोत्पातौ प्रति कारणत्वं व्यवहि-

तत्त्वेन निर्व्यापारत्वात् ॥६८॥

स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रति ॥ ६९॥

नच व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेः ॥ ७०॥

परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥ ७१॥

सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेनतदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः ७२

ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वात् यः प्रयत्नानन्तरीयकः स परिणतिमान् यथा-स्तम्भो यो वा न परिणतिमान् स न प्रयत्नान-

न्तरीयको यथा वान्ध्येयः प्रयत्नानन्तरीयक-
श्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य
साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वै-
धर्म्येणच ॥ ७३ ॥

अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुप-
लम्भादिति कार्यस्य ॥ ७४ ॥

भविष्यति वर्षं तथाविधवारिवाहविलोक-
नादिति कारणस्य ॥ ७५ ॥

उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूद-
यदर्शनादिति पूर्वचरस्य ॥ ७६ ॥

उदगुर्मुहूर्त्तात्पूर्वं पूर्वफल्गुन्य उत्तरफल्गुनीना-
मुद्गमोपलब्धेरित्युत्तरचरस्य ॥ ७७ ॥

अस्तीह सहकारफले रूपविशेषः समास्वाद्य-
मानरसविशेषादिति सहचरस्य ॥ ७८ ॥

विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्तप्रकारा ॥ ७९ ॥

तत्राद्या स्वभावविरुद्धोपलब्धिर्यथा ॥८०॥

नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भात् ८१

प्रतिषेध्यविरुद्धव्याप्यादीनामुपलब्धयः षट् ८२

विरुद्धव्याप्योपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्रसन्देहात् ॥ ८३ ॥

विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेः ॥ ८४ ॥

विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यंवचः समस्तरागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वात् ॥ ८५ ॥

विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते पुष्यतारा रोहिण्युद्गमात् ॥ ८६ ॥

विरुद्धोत्तरचरोपलब्धिर्यथा नोदगात् मुहूर्त्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयात् ॥८७॥

विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनात् ॥ ८८ ॥

अनुपलब्धेरपि द्वैरूप्यमविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च ॥ ८९ ॥

तत्राविरुद्धानुपलब्धिःप्रतिषेधाववोधे सप्तप्रकारा ॥ ९० ॥

प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिरिति ॥ ९१ ॥

स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥ ९२ ॥

व्यापकानुपलब्धिर्यथा नास्त्यत्रप्रदेशे पनसः पादपानुपलब्धेः ॥ १३ ॥

कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्तिकं बीजमङ्कुरानवलोकनात् ॥ १४ ॥

कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्रभृतयो भावास्तत्त्वार्थश्रद्धानाभावात् ॥ १५ ॥

पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते स्वातिनक्षत्रं चित्रोदयादर्शनात् ॥ १६ ॥

उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभद्रपदा मुहूर्त्तात् पूर्वमुत्तरभद्रपदोद्गमानवगमात् ॥ १७ ॥

सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलब्धेः ॥ १८ ॥

विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा १९

विरुद्धकार्यकारणस्वभावव्यापकसहचरा-
नुपलम्भभेदात् ॥१००॥

विरुद्धकार्यानुपलब्धिर्यथा ऽत्रशरीरिणि रो-
गातिशयः समस्ति निरोगव्यापारानुपल-
ब्धेः ॥१०१॥

विरुद्धकारणानुपलब्धिर्यथा विद्यते ऽत्र प्रा-
णिनि कष्टमिष्टसंयोगाभावात् ॥१०२॥

विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमने-
कान्तात्मकमेकान्तस्वभावानुपलम्भात् १०३

विरुद्धव्यापकानुपलब्धिर्यथा ऽस्त्यत्र च्छा-
या औष्ण्यानुपलब्धेः ॥१०४॥

विरुद्धसहचरानुपलब्धिर्यथा ऽस्त्यस्य मि-
थ्याज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०५॥

इतिस्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूप-
निर्णयोनामतृतीयः परिच्छेदः ॥ ३ ॥

आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ॥ १ ॥

उपचारादाप्तवचनञ्च ॥ २ ॥

यथा समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्न सानुप्रभृतयः ॥ ३ ॥

अभिधेयं वस्तु यथावस्थितं यो जानीते यथा ज्ञातञ्चाभिधत्ते स आप्तः ॥ ४ ॥

तस्य हि वचनमविसंवादि भवति ॥ ५ ॥

सच द्वेधा लौकिकोलोकोत्तरश्च ॥ ६ ॥

लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादिः ॥ ७ ॥

वर्णपदवाक्यात्मकं वचनम् ॥ ८ ॥

अकारादिः पौद्गलिको वर्णः ॥ ९ ॥

वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदं पदानान्तु वाक्यम् ॥ १० ॥

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्दः ॥ ११॥

अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवत् यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनुसरतः ॥ १२ ॥

सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थमभिदधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥

एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोःसमस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितःसप्तधावाक्प्रयोगः सप्तभङ्गी ॥ १४ ॥

तद्यथा स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमोभङ्गः ॥ १५ ॥

स्यान्नास्त्येव सर्वमितिनिषेधकल्पनया द्वितीयः ॥ १६ ॥

स्यादस्त्येव स्यान्नास्त्येवेति क्रमतोविधिनि षेधकल्पनया तृतीयः ॥ १७॥

स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्प- नया चतुर्थः ॥ १८ ॥

स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पन. या युगपद्विधिनिषेधकल्पनया च पञ्चमः १९
स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधक- ल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः २०

स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवे- ति क्रमतोविधिनिषेधकल्पनया युगपद्वि- धिनिषेधकल्पनया च सप्तमइति ॥ २१ ॥

विधिप्रधानएव ध्वनिरिति न साधु ॥२२॥

निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥२३ ॥

अप्राधान्यनैव ध्वनिस्तमभिधत्तइत्यप्यसारम्२४

क्वचित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिप-
न्नस्य तस्याप्राधान्याऽनुपपत्तेः ॥ २५ ॥

निषेधप्रधानएव शब्द इत्यपि प्रागुक्तन्याया-
दपास्तम् ॥ २६ ॥

क्रमादुभयप्रधानएवायमित्यपि नसाधीयः २७

अस्य विधिनिषेधाऽन्यतरप्रधानत्वानुभव-
स्याप्यबाध्यमानत्वात् ॥ २८ ॥

युगपद्विधिनिषेधात्मनो ऽर्थस्यावाचक ए-
वासौ इतिवचो न चतुरस्रम् ॥ २९ ॥

तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ३०

विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनोयु
गपदवाचकएव स इत्येकान्तोपिनकान्तः ३१

निषेधात्मनः सहद्वयात्मनश्चार्थस्य वाचक-
त्वावाचकत्वाभ्यामपिशब्दस्य प्रतीयमान-
त्वात् ॥ ३२ ॥

निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपद्वाचक एवायमित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥

इतरथापि संवेदनात् ॥ ३४ ॥

क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चावाचकश्च ध्वनिर्नान्यथा इत्यपि मिथ्या ॥ ३५ ॥

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ३६

एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ।

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तून्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ३८

प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्ता-

नामेव संभवात् ॥ ३९ ॥

तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

तस्या ऽपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्याऽपिसप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥४२॥

इयंसप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥

प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनःकालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचःसकलादेशः ४४

तद्विपरीतस्तु विकलादेशः ॥ ४५ ॥

तद्विभेदमपिप्रमाणमात्मीयप्रतिबन्धकाप-

गमविशेषस्वरूपसामर्थ्यतः प्रतिनियतमर्थमवद्योतयति ॥ ४६ ॥

नतदुत्पत्तितदाकारताभ्यां तयोःपार्थ्यक्ये-न सामस्त्येन च व्यभिचारोपलम्भात्॥ ४७॥

इति आगमाख्यप्रमाणस्वरूपनिर्णयोनामचतुर्थः परिच्छेदः ४

तस्य विषयः सामान्यविशेषाद्यनेकान्तात्मकं वस्तु ॥ १ ॥

अनुगतविशिष्टाकारप्रतीतिविषयत्वात् प्राचीनोत्तराकारपरित्यागोपादानावस्थानस्वरूपपरिणत्यार्थक्रियासामर्थ्यघटनाच्च २

सामान्यं द्विप्रकारं तिर्यक्सामान्यमूर्द्धतासामान्यञ्च ॥ ३ ॥

प्रतिव्यक्तितुल्यापरिणतिस्तिर्यक्सामान्यं शबलशाबलेयादिपिण्डेषु गोत्वं यथा॥४॥

पूर्वापरपरिणामसाधारणंद्रव्यमूर्द्धतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवत् ॥५॥

विशेषोपि द्विरूपो गुणः पर्यायश्च ॥ ६ ॥

गुणः सहभावीधर्मो यथात्मनि विज्ञानव्यक्तिशक्त्यादिः ॥ ७ ॥

पर्यायस्तूक्रमभावी यथातत्रैवसुखदुःखादिः८

इतिविषयस्वरूपनिर्णयोनामपञ्चमः परिच्छेदः ।

यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥ १ ॥

तद्विविधमानन्तर्येण पारम्पर्येण च ॥ २ ॥

तत्राऽऽनन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥ ३ ॥

पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥ ४ ॥

शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥ ५ ॥

तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः ॥ ६ ॥

उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन हेतोर्व्यभिचार इति न विभावनीयम् ॥ ७ ॥

तस्यैकप्रमातृतादात्म्येन प्रमाणादभेदव्यवस्थितेः ॥ ८ ॥

प्रमाणतया परिणतस्यैवात्मनः फलतया परिणतिप्रतीतेः ॥ ९ ॥

यः प्रमिमीते स एवोपादत्ते परित्यजत्युपेक्ष-

ते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् ॥ १० ॥

इतरथा स्वपरयोः प्रमाणफलव्यवस्थाविप्लवः प्रसज्येत ॥ ११ ॥

अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्तइति नाशङ्कनीयम् ॥ १२ ॥

कथञ्चित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानात् १३

साध्यसाधनभावेन प्रमाणफलयोः प्रतीयमानत्वात् ॥ १४ ॥

प्रमाणं हि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वात् ॥ १५ ॥

स्वपरव्यवसितिक्रियारूपाऽज्ञाननिवृत्त्याख्यं फलं तु साध्यं प्रमाणनिष्पाद्यत्वात् ॥ १६ ॥

प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथ-
ञ्चिद्भेदः ॥ १७॥

कर्तृक्रिययोःसाध्यसाधकभावेनोपलम्भात् ॥

कर्त्ता हि साधकः स्वतन्त्रत्वात् क्रियातु सा-
ध्या कर्तृनिर्वर्त्यत्वात् ॥१९॥

न च क्रियाक्रियावतः सकाशादभिन्नैव
भिन्नैव वा प्रतिनियतक्रियाक्रियावद्भावभङ्ग-
प्रसङ्गात् ॥ २० ॥

संवृत्या प्रमाणफलव्यवहार इत्यप्रामाणिक-
प्रलापः परमार्थतः स्वाभिमतसिद्धिविरो-
धात् ॥ २१ ॥

ततः पारमार्थिक एव प्रमाणफलव्यवहारः
सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्यः।२२।

प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीतं तदा-

भासम् ॥ २३ ॥

अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ॥ २४ ॥

यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसंशयानध्यवसायाः ।

तेभ्यः स्वपरव्यवसायस्यानुपपत्तेः ॥ २६ ॥

सांव्यवहारिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २७ ॥

यथाऽम्बुधरेषु गन्धर्वनगरज्ञानं दुःखे सुखज्ञानञ्च ॥ २८ ॥

पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २९ ॥

यथाशिवाख्यस्य राजर्षेरसंख्यातद्वीपसमु-

द्वेषु मप्तद्वीपसमुद्रज्ञानम् ॥ ३० ॥

अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभासम् ॥ ३१ ॥

अननुभूते मुनिमण्डले तन्मुनिमण्डलमितियथा

तुल्ये पदार्थे स एवायमित्येकस्मिन्श्च तेन तुल्य इत्यादिज्ञानं प्रत्यभिज्ञाभासम्॥३३॥

यमलकजातवत् ॥३४॥

असत्यामपि व्याप्तौतदवभासस्तर्काभासः३५

सश्यामो मैत्रतनयत्वात् इत्यत्र यावान् मैत्रतनयः सश्यामः इति यथा ॥३६॥

पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमवसेयम् ॥३७॥

तत्र प्रतीतानिराकृतानभीप्सितसाध्यधर्मविशेषणास्त्रयः पक्षाभासाः ॥३८॥

प्रतीतसाध्यधर्म्मविशेषणो यथार्हतान् प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्तिजीव इत्यादि ॥३९॥

निराकृतसाध्यधर्मविशेषणः प्रत्याक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य निराकरणादनेकप्रकारः ॥ ४० ॥

प्रत्यक्षनिराकृतसाध्यधर्म्मविशेषणो यथा नास्तिभूतविलक्षणआत्मा ॥ ४१ ॥

अनुमाननिराकृतसाध्यधर्मविशेषणो यथा नास्ति सर्वज्ञो वीतरगो वा ॥४२॥

आगमनिराकृतसाध्यधर्मविशेषणो यथा जैनै रजनिभोजनं भजनीयम् ॥४३॥

लोकनिराकृतसाध्यधर्म्मविशेषणो यथा नापारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥४४॥

स्ववचननिराकृतसाध्यधर्म्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदकं प्रमाणम् ॥४५॥

अनभीप्सितसाध्यधर्म्मविशेषणो यथा स्याद्वादिनः शाश्वतिकएव कलशादिरशाश्वतिक एवेवेति वदतः ॥४६॥

असिद्धविरुद्धानैकान्तिकास्त्रयोहेत्वाभासाः ॥ ४७ ॥

यस्यान्यथानुपपत्तिः प्रमाणेन न प्रतीयतेसोऽसिद्धः ॥४८॥

सद्विविध उभयासिद्धोऽन्यतरासिद्धश्च ४९

उभयासिद्धो यथा परिणामीशाब्दश्चाक्षुषत्वात् ॥५०॥

अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ॥५१॥

साध्यविपर्ययेणैव यस्यान्यथानुपपत्तिरध्यव-सीयते स विरुद्धः ॥५२॥

यथा नित्यएव पुरुषोऽनित्यएव वा प्रत्यभि ज्ञानादिमत्वात् ॥५३॥

यस्यान्यथानुपपत्तिः सन्दिह्यते सोऽनैका-न्तिकः ॥ ५४ ॥

सद्द्वेधा निर्णीतविपक्षवृत्तिकः सन्दिग्ध-विपक्षवृत्तिकश्च ॥ ५५ ॥

निर्णीतविपक्षवृत्तिको यथा नित्यः शब्दः प्रमेयत्वात् ॥५६॥

सन्दिग्धविपक्षवृत्तिको यथा विवादापन्नः पुरुषः सर्वज्ञो न भवति वक्तृत्वात् ॥५७॥

साधर्म्येण दृष्टान्ताभासोनवप्रकारः ॥५८॥

साध्यधर्मविकलः साधनधर्मविकलः उभ-

यधर्म्मविकलः सन्दिग्धसाध्यधर्म्मा सन्दिग्धसाधनधर्म्मा सन्दिग्धोभयधर्म्मानन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ५९।

तत्रापौरुषेयः शब्दोऽमूर्त्तत्वाद्दुःखवदिति साध्यधर्म्मविकलः ॥ १ ॥ ६० ॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमाणुवदिति साधनधर्म्मविकलः ॥ २॥६१॥

कलशवदित्युभयधर्म्मविकलः ॥ ३ ॥ ६२॥

रागादिमानयं वक्तृत्वाद्देवदत्तवदिति सन्दिग्धसाध्यधर्मा ॥ ३ ॥ ६३ ॥

मरणधर्मायं रागादिमत्वात् मैत्रवदिति संदिग्धसाधनधर्मा ॥ ५ ॥६४॥

नायं सर्वदर्शी रागादिमत्त्वान्मुनिविशेषवदिति सन्दिग्धोभयधर्मा । ६ । ६५ ॥

रागादिमान् विवक्षितः पुरुषोवक्तृत्वादिष्ट-पुरुषवदित्यनन्वयः । ७ । ६६ ॥

अनित्यः शब्दः कृतकत्वात् घटवदित्य-प्रदर्शितान्वयः । ८ । ६७ ॥

अनित्यः शब्दः कृतकत्वात् यदनित्यं तत् कृतकं घटवदिति विपरीतान्वयः।९।६८॥

वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥६९॥

असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यति-रेकोऽसिद्धोभयव्यतिरेकः सन्दिग्धसाध्य-व्यतिरेकः सन्दिग्धसाधनव्यतिरेकः सन्दि-ग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्य-तिरेको विपरीतव्यतिरेकश्च ॥ ७० ॥

तेषु भ्रान्तमनुमानं प्रमाणत्वात्यत्पुनर्भ्रान्तं न भवति न तत् प्रमाणं यथा स्वप्नज्ञानमिति

असिद्धसाध्यव्यतिरेकः स्वप्न ज्ञानात् भ्रान्तत्वस्यानिवृत्तेः । १ । ७१ ॥

निर्विकल्पकं प्रत्यक्षं प्रमाणत्वाद्यत्तु सविकल्पकं न तत्प्रमाणं यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः । २ । ७२ ॥

नित्यानित्यःशब्दः सत्वात् यस्तु न नित्यानित्यः सनसंस्तद्यथा स्तम्भ इत्यसिद्धोभयव्यतिरेकः स्तम्भान्नित्यान्नित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः । ३ । ७३ ॥

असर्वज्ञोऽनाप्तो वा कपिलोऽक्षीणकैकान्तवादित्वाद्यः सर्वज्ञ आप्तो वा सक्षणिकैकान्तवादी यथासुगत इति सान्दिग्धसाध्यव्यतिरेकः सुगतेऽसर्वज्ञतानाप्तत्वयोः साध्य-

धर्म्मयोर्व्यावृत्तेः सन्देहात् । ४ । ७४ ॥

अनादेयवचनः कश्चिद्विवक्षितः पुरुषोरागा-दिमत्वाद्यः पुनरादेयवचनः स वीतराग-स्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधन-व्यतिरेकः शौद्धोदनौ रागादिमत्वस्य निवृत्तेः संशयात् । ७५॥५॥

नवीतरागः कपिलः करुणास्पदेष्वपि परम-कृपयाऽनर्पितनिजपिशितशकलत्वात् य-स्तुवीतरागः सकरुणास्पदेषुपरमकृपया स-मर्पितनिजपिशितशकलस्तद्यथातपनबन्धु-रितिसन्दिग्धोभयव्यतिरेकः तपनबन्धौवीत-रागत्वाभावस्य करुणास्पदेष्वपि परमकृपया-नर्प्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् । ६ ॥ ७६ ॥

न वीतरागः कश्चिद्विवक्षितः पुरुषोवक्तृत्वात् यः पुनर्वीतरागो न स वक्ता यथोपलखण्डइत्यव्यतिरेकः । ७७ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वादाकाशवदित्यप्रदर्शितव्यतिरेकः । ७८ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वाद्यदकृतकं तन्नित्यं यथाकाशमिति विपरीतव्यतिरेकः ।७९॥२॥

उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने तदाभासौ ॥ ८० ॥

यथापरिणामीशब्दः कृतकत्वाद्यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति च ८१।

तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्दइति तस्मात्परिणामी कुम्भ इति वा ॥८२॥

अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ।८३।

यथा मेकलकन्यकायाः कूले तालहिंताल-योर्मूलेसुलभाः पिण्डखर्जूराः सन्तित्वरितं गच्छत २ शावकाः ॥ ८४ ॥

प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्यानं तस्य संख्याभासम् ॥ ८५ ॥

सामान्यमेव विशेषएव तद्वयं वा स्वतन्त्र-मित्यादिस्तस्य विषयाभासः ॥ ८६ ॥

अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासम् ॥ ८७ ॥

इति फलप्रमाणस्वरूपाद्याभासनिर्णयोनाम षष्ठः परिच्छेदः ॥ ६ ॥

नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः सप्रतिपत्तुरभिप्रायविशेषोनयः ॥ १ ॥

स्वाभिप्रेतादंशादितरांशापलापी पुनर्नयाभासः ॥ २ ॥

सव्याससमासाभ्यान्द्विप्रकारः ॥ ३ ॥

व्यासतोऽनेकविकल्पः ॥ ४ ॥

समासतस्तद्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च ॥ ५ ॥

आद्यो नैगमसंग्रहव्यवहारभेदात्त्रेधा ॥६॥

धर्म्मयोर्धर्म्मिणोर्धर्म्मधर्म्मिणोश्चप्रधानोपसर्जनभावेन यद्विवक्षणं सनैकगमोनैगमः ॥ ७ ॥

सच्चैतन्यमात्मनीतिधर्म्मयोः ॥ ८ ॥

वस्तुपर्यायवद्द्रव्यं इति धर्म्मिणोः ॥ ९ ॥

क्षणमेकं सुखीविषयासक्तजीवइति धर्म-धर्म्मिणोः ॥ १० ॥

धर्म्मद्वयादीनामैकान्तिकपार्थक्याभिसन्धि-र्नैगमाभासः ॥ ११ ॥

यथात्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग् भूते इत्यादि ॥ १२ ॥

सामान्यमात्रग्राही परामर्शः संग्रहः ॥१३॥

अयमुभयविकल्पः परोऽपरश्च ॥ १४ ॥

अशेषविशेषेष्वौदासीन्यम्भजमानः शुद्ध-द्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः १५

विश्वमेकं सदविशेषादिति यथा ॥ १६ ॥

सत्ताद्वैतं स्वीकुर्वाणः सकलविशेषान्निरा-चक्षाणस्तदाभासः ॥ १७ ॥

यथासत्तैव तत्त्वन्ततः पृथग्भूतानां विशेष-णामदर्शनात् ॥ १८ ॥

द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वा-नस्तद्भेदेषु गजनिमीलिकामवलम्बमानः पुनरपरसंग्रहः ॥ १९ ॥

धर्माधर्माकाशकालपुद्गलजीवद्रव्याणा-मैक्यं द्रव्यत्वाभेदादित्यादिर्यथा ॥ २० ॥

द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नु-वानस्तदाभासः ॥ २१ ॥

यथा द्रव्यत्वमेव तत्त्वं ततोऽर्थान्तरभूतानां द्रव्याणामनुपलब्धेः ॥ २२ ॥

संग्रहेण गोचरीकृतानामर्थानां विधिपूर्व-कमवहरणं येनाभिसन्धिना क्रियते स व्य-वहारः ॥ २३ ॥

यथा यत्सत्तद्द्रव्यं पर्यायो वेत्यादि ॥२४॥

यः पुनरपारमार्थिकद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः ॥ २५॥

यथा चार्वाकदर्शनम् ॥ २६ ॥

पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ॥ २७ ॥

ऋजुवर्त्तमानक्षणस्थायिपर्यायमात्रंप्राधान्यतः सूत्रयन्नभिप्राय विशेष ऋजुसूत्रः ॥ २८ ॥

यथासुखविवर्त्तः सम्प्रत्यस्तीत्यादि ॥२९॥

सर्वथाद्रव्यापलापीतदाभासः ॥ ३० ॥

यथा तथागतमतम् ॥ ३१ ॥

कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः ॥ ३२ ॥

यथा बभूव भवति भविष्यति सुमेरुरित्यादिः।

तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः ३४

यथा बभूव भवति भविष्यति सुमेरुरित्यादयोभिन्नकालः शब्दाभिन्नमेवार्थमभिदधति भिन्नकालशब्दत्वात्तादृक्सिद्धान्यशब्दवदित्यादिः ॥ ३५ ॥

पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहन्समभिरूढः ॥ ३६ ॥

इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरन्दर इत्यादिषु यथा ॥ ३६ ॥

पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणस्तदाभासः ॥ ३७ ॥

यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दाभिन्नाभिधेयाएव भिन्नशब्दत्वात् करिकुरङ्गतुरङ्गशब्दवदित्यादिः ॥ ३८ ॥

शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियावि-
ष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ।३९।

यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः
शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ।४०।

क्रियानाविष्टं वस्तुशब्दवाच्यतया प्रतिक्षिपं-
स्तुतदाभासः ॥ ४२ ॥

यथाविशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घट-
शब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रि-
याशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥

एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थ-
नयाः शेषास्तुत्रयः शब्दवाच्यार्थगोचरतया
शब्दनयाः ॥ ४४ ॥

पूर्वः पूर्वोनयः प्रचुरगोचरः परः परस्तु परि-
मितविषयः ॥ ४५ ॥

सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभू-
मिकत्वात् भूमविषयः ॥ ४६ ॥

सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्त-
सत्समूहोपदर्शकत्वात्बहुविषयः ॥ ४७ ॥

वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकाल-
विषयावलम्बित्वादनल्पार्थः ॥ ४८ ॥

कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृ-
जुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥ ४९ ॥

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभि-
रूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूत-
विषयः ॥ ५० ॥

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभू-
तात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महा-
गोचरः ॥ ५१ ॥



92

नयवाक्यमपि स्वविषये प्रवर्त्तमानं विधि-
प्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५२ ॥

प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥५३॥

प्रमाताप्रत्यक्षादिप्रसिद्धआत्मा ॥ ५४ ॥

चैतन्यस्वरूपः परिणामीकर्त्ता साक्षाद्भोक्ता-
स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलि-
कादृष्टवांश्चायम् ॥ ५५ ॥

तस्योपात्तपुंस्त्रीशरीरस्य सम्यग्ज्ञानक्रियाभ्यां
कृत्स्नकर्मक्षयस्वरूपासिद्धिः ॥ ५६ ॥

इति श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वा-
लोकालङ्कारेनयात्मस्वरूपनिर्णयो नाम
सप्तमः परिच्छेदः ॥ ७ ॥

अष्टमः परिच्छेदः ।

विरुद्धयोर्धर्म्मयोरेकधर्म्मव्यवच्छेदेनस्वीकृततदन्यधर्म्मव्यवस्थापनार्थं साधनदूषणवचनं वादः ॥ १ ॥

प्रारम्भकश्चात्र विजिगीषुस्तत्त्वनिर्णिनीषुश्च

स्वीकृतधर्मव्यवस्थापनार्थं साधनदूषणाभ्यां परं पराजेतुमिच्छुर्जिगीषुः॥ ३ ॥

तथैव तत्त्वंप्रतितिष्ठापयिषुस्तत्त्वनिर्णिनीषुः ४

अयं च द्वेधा स्वात्मनि परत्र च ॥५ ॥

आद्यः शिष्यादिः ॥ ६ ॥

द्वितीयोगुर्वादिः ॥ ७ ॥

अयं द्विविधः क्षायोपशमिकज्ञानशाली केवली च ॥ ८ ॥

एतेन प्रत्यारम्भकोपि व्याख्यातः ॥ ९ ॥

तत्र प्रथमे प्रथमतृतीयतुरीयाणां चतुरङ्ग-

वान्यतमस्याप्यङ्गस्यापाये जयपराजयव्यव-
स्थादिदौस्थ्यापत्तेः ॥१०॥

द्वितीये तृतीयस्य कदाचिद्द्व्यङ्गः कदाचित्त्र्यङ्गः
तत्रैव द्व्यङ्गस्तुरीयस्य ॥१२॥

तृतीये प्रथमादीनां यथायोगं पूर्ववत् ॥१३॥

तुरीये प्रथमादीनामेवम् ॥१४॥

वादिप्रतिवादिसभ्यसभापतयश्चत्वार्य्यङ्गानि

प्रारम्भकप्रत्यारम्भकावेव मल्लप्रतिमल्ल-
न्यायेन वादिप्रतिवादिनौ ॥ १६ ॥

प्रमाणतः स्वपक्षस्थापनप्रतिपक्षप्रतिक्षेपाव-
नयोः कर्म्म ॥१७॥

वादिप्रतिवादिसिद्धान्ततत्त्वनदीष्णत्वधार-
णाबाहुश्रुत्यप्रतिभाक्षान्तिमाध्यस्थैरुभयाभि-
मताःसभ्याः॥ १८ ॥

वादिप्रतिवादिनोर्यथायोगं वादस्थानक-
कथाविशेषाङ्गीकारेणाग्रवादोत्तरवादनिर्देशः
साधकबाधकोक्तिगुणदोषावधारणं यथा-
वसरन्तत्त्वप्रकाशनेन कथाविरमणं यथासंभ-
वं सभायांकथाफलकथनं चैषांकर्माणि ॥१९॥

प्रज्ञाज्ञैश्वर्यक्षमामाध्यस्थ्यसंपन्नः सभापतिः॥

वादिसभ्याभिहितावधारणकलहव्यपोहादिकं
चास्य कर्म्म ॥२१॥

सजिगीषुकेऽस्मिन्यावत्सभ्यापेक्षं स्फूर्तौवक्त-
व्यम् ॥ २२ ॥

उभयोस्तत्त्वनिर्णिनीषुत्वेयावत्तत्त्वनिर्णयं
यावत्स्फूर्त्तिं च वाच्यम् ॥ २३ ॥

इतिश्रीदेवाचार्यनिर्मितेप्रमाणनयतत्त्वालोका-
लङ्कारेवादिप्रतिवादिन्यायनिर्णयोनामाष्टमः
पारिच्छेदः ॥ ८ ॥

# शुद्धिपत्रम् ।

| पृष्ठः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८ | ५ | तस्याऽपि | तस्याअपि । |
| ३० | ९ | पर्यायस्तू | पर्यायस्तु । |
| ३१ | ८ | बुध्यादिना | बुद्ध्यादिना । |
| ३५ | ९ | अवभा | अवभास । |
| ,, | ११ | स श्यामः इति | स श्याम इति |
| ३९ | १५ | सन्दिग्धो मय | सन्दिग्धोभय । |
| ४१ | १० | नित्यान्नित्य | नित्यानित्य । |
| ,, | १२ | क्षीणक | क्षणिक । |
| ४७ | २ | विशेषणाम् | विशेषाणाम् । |
| ५४ | ४ | तृतीस्य | तृतीयस्य |

श्रीजैनयशोविजयग्रन्थमाला (१)

॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

श्रीकाशीस्थ न्यायविशारद महामहोपाध्याय
श्रीयशोविजय नामाङ्कित श्वेताम्बर जैन
संस्कृत पाठशालातः प्रादुर्भूतः

काश्यां
चन्द्रप्रभायन्त्रागारे मुद्रितश्च
वीर सं० २४३० सन् १९०४





पायं पायं प्रवचनसुधां प्रीयते या प्रकामं
स्वैरं स्वैरं चरति कृतिनां कीर्तिवल्लीवनेषु
दोग्ध्री कामान्नवनवरसैः सा भृशं प्रीणयन्ती
मादृग् वत्सान् जयति जगति श्रीगवीदेवसूरेः
"श्रीरत्नप्रभाचार्यः"

अर्हम्

# प्रस्तावना।

---:o:---

अथास्यां संसृतिसरण्यां समागत्य सर्वे शरीरिणः शान्तिशकलमप्यनासादयन्तः समयसरीसृपशीर्णाः संसारापारपारावारपारमुपसर्तुमपारयन्तः परमपारमार्थिकपदमपि पुण्यपद्यया प्राप्तुमपारमार्थिकं मन्वानाः क्षोदिष्ठप्रज्ञया सर्वाऽवज्ञया च पाञ्चभौतिकपिण्डप्रेष्ठाः कलिकल्मषकालिमकलङ्कद्राघिष्ठा विषमविषविषयाशीविषदष्टविशीर्णविषस्फेष्ठाः किंवा विषकीटा इव विषयविषभुजो ऽनादिदुर्वासनावासितबुद्धयश्चाहमहमिकामेव परमपुरुषार्थं साधिष्ठमाकलयन्तोवलिताश्च गरिष्ठाहोपुरुषिकया प्रत्यहं पितृवने दीर्घनिद्रासुखमनुभवन्तः क्रियासमभिहारेण ह्रसिष्ठजननीजठरे वसन्तः सांसारिकानेकबंहिष्ठकटुक्लेशपाशिताः सुप्तप्रबुद्धा इव प्रबुद्धसुप्ता इव तिष्ठन्ति।

तदत्र किं कारणं कोहेतुः किं प्रयोजनं कस्मादित्थमिति साम्रेडितप्रश्नावसरे सर्वमेतदविद्याविलाससाम्राज्येनेति वारं वारं वयमुत्तरयामः।

हंहो त्रिलक्षणशेमुषीका विचक्षणाः! शुभवन्तोभवन्तः सहृदयहृदयसन्तोषप्रदन्तोषितरसज्ञ रसज्ञा रस ज्ञापितं कर्ण्यतांवहत्किमपि श्वःश्रेयसामिदमाकर्ण्य नीरक्षीरविवेचनविलक्षणचेतनाचातुरीचमत्कारचमत्कृताः सकृदप्योमिति ब्रूयुः।

अविद्यानिरासार्थमेव प्रयतमानैरस्माभिः श्रीजैनयशोविजयग्रन्थमाला ऽनर्घ्यमणिगणगुम्फिता हारभूतेव भवतां श्रीमतामुपहारीयते।

तस्यामेकेयं मणीरामायिता प्रमाणनयतत्वालोकालङ्काररूपा सर्वोपरि सुमेरुभूतेव विलसति।

अमुं ग्रन्थं श्री १०८ सुगृहीतनाम्नोवादिप्रवरदेवसूरेर्मुखाम्भोजनिर्गलितामृतधाराऽऽसारमिव प्रमाणनयतत्वालोकालङ्कारमदृष्टपूर्वं जैनमतमन्तव्यप्रमाणविचारकरं दुर्वादिवादवासनानिर्यातनपरं विलक्षणभङ्गीकं सप्तभङ्गीतरङ्गरिङ्गितं निवन्धं निरीक्ष्य किमिदं कथमिदं कस्येदं कीदृक्षमिदमिति स्वभावेनैव जिज्ञासवः संपत्स्यन्ते तत्त्वग्रहाग्रहग्रहिलाः शास्त्रप्रियाग्रिया स्तदत्रावश्यकं किञ्चनोपन्यस्तुम्।

तत्र प्रथममवधेयं धीमद्धौरेयैस्तत्रभवद्भिः, यत्कस्यापि मतस्य तत्त्वमनाकलय्य खण्डनमण्डनबद्धपरिकरा ये यथा-

जाताः सलभा इव परिपतन्ति ते लभन्ते न स्वात्मविनाशादृते किञ्चिदपि भावुकम् ।

श्रीवादिदेवसूरिभगवतोऽन्तेवासी श्रीरत्नप्रभसूरिर्वसुलोकार्क १२३८ मिते विक्रमाब्दे निजानिर्मितोपदेशमालाटीकायामेवं व्यलेखीत् ।

शिष्यः श्रीमुनिचन्द्रसूरिमुनिभिर्गीतार्थचूडामणिः
पट्टे स्वे विनिवेशितस्तदनु स श्रीदेवसूरिप्रभुः ।
अस्थाने जयसिंहदेवनृपतेर्येनास्तदिग्वाससा
स्त्रीनिर्याणसमर्थनेन विजयस्तम्भः समुत्तम्भितः ॥

तत्पट्टप्रभवोभवन्नथ गुणग्रामाभिरामोदयाः
श्रीभद्रेश्वरसूरयः शुचिधियस्तन्मानसप्रीतये ।
श्रीरत्नप्रभसूरिभिः शुभकृते श्रीदेवसूरिप्रभोः
शिष्यैः सेयमकारि संमदकृते वृत्तिर्विशेषार्थिनाम् ॥

तथा च ।

विक्रमाद् वसुलोकार्क १२३८ वर्षे माघे समर्थिता
एकादश सहस्राणि मानं सार्धं शतं तथा ॥ ११५०

अस्माद् श्रीरत्नप्रभसूरेः समयः स्फुटमेवावभाति–

किञ्च किञ्चिन्न्यूनाधिकः सएव समयस्तदीयगुरोर्देव सूरेरपि चास्मादेवानिर्णेतुं शक्यस्तथापि दुर्वद्धं सुवद्धमिति न्यायेन पुनः प्रमाणान्तरं प्रदर्श्यते ।

श्रीमुनिसुन्दरसूरिणा रसर्तुमनुमिते १४६६ ऽब्दे *गुर्वावल्यामेवं व्यलेखि ।

अष्टहयेशमितेऽब्दे ११७८ विक्रमकालाद्दिवं गतो भगवान् ।
श्रीमुनिचन्द्रमुनीन्द्रोददातु भद्राणि संघाय ॥ ७१ ॥

तस्मादभूदजितदेवगुरुर्गरीयान्
प्राच्यस्तपः श्रुतिनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो
वादीश्वरोस्तगुणचन्द्रमदोपि वाल्ये ॥ ७२ ॥

येनार्दितश्चतुरसीतिसुवादिलीला-
लब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः
श्रीसिद्धभूमिपतिसंसादि पत्तनेऽस्मिन् ॥ ७३ ॥

वेदमुनीशमिते ११७४ऽब्देदेवगुरुर्जगदनुत्तरोभ्युदितः ।
श्रीमुनिचन्द्रगुरोरिति शिष्या वहवोभवन् विदिताः ७४॥

* रसरसमनुमितवर्षे १४६६ मुनिसुन्दरसूरिणाकृतापूर्वम् ।
मध्यस्थै रवधार्या गुर्वावलीयं जयश्रीद्धा ॥ ८६ ॥

अस्मादपि स्फुटतरःसमयोदीपवद्देदीप्यते ।

श्रीपूज्यपाददेवसूरिरेव प्रमाणनयतत्वालोकालङ्कारस्य रत्नाकरनाम्नीं महाव्याख्यां रचितवान् ।

तद् विषयेपि गुर्वावल्यां लिखितमस्ति—

**स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां नहि देवसूरिः ।**
**यतश्चतुर्विंशतिसूरिशाखं यस्यैव नाम्ना विदितं बभूव ७४**

देवसूरिशिष्यैः श्रीरत्नप्रभसूरिभिर्नातिलघीयसी रत्नाकरावतारिका नाम्नी टीका विनिर्मितास्ति । या मूलटिप्पणपञ्जिकाभिः सहिता मुद्रणालये मुद्रयितुमारब्धा तस्यामेवं लिलेख श्रीरत्नप्रभः ।

**यैरत्र स्वप्रभया दिगम्बरस्यार्पिता परा भूतिः ।**
**प्रत्यक्षं विबुधानां जयन्तु ते देवसूरयोनव्याः ॥ ३ ॥**

श्रीमल्लधारिराजशेखरसूरिणा पञ्जिकाकारेणापि लिखितमस्ति ।

**स्याद्वादरत्नाकर इत्यस्ति ग्रन्थोमहत्तमः ।**
**वादिवृन्दारकश्रीमद्देवसूरिविनिर्मितः ॥ ४ ॥**

न्यायशास्त्रस्यायमद्वितीयोग्रन्थः

**अत्राष्टौ परिच्छेदाः सन्ति ।**

तत्र प्रथमपरिच्छेदे–प्रमाणस्वरूपनिर्णयः ।

द्वितीये परिच्छेदे–प्रत्यक्षस्वरूपनिर्णयः ।

तृतीयपरिच्छेदे–स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयः

चतुर्थपरिच्छेदे–आगमाख्यप्रमाणस्वरूपनिर्णयः ।

पञ्चमपरिच्छेदे–विषयस्वरूपनिर्णयः ।

षष्ठपरिच्छेदे–फलप्रमाणस्वरूपाद्याभासनिर्णयः ।

सप्तमपरिच्छेदे–नयात्मस्वरूपनिर्णयः ।

अष्टमपरिच्छेदे–वादिप्रवादिन्यायानिर्णयः ।

एतद्ग्रन्थमुद्रणावसरे पञ्चषाणि पुस्तकानि प्राप्तानि, तेषांमध्ये

१ श्री महामान्यधन्यतम धर्मविजयमुनीन्द्रतो लब्ध-मेकं पुस्तकम् ।

२ श्री मुनिराज वीरविजयेन दत्तमेकं पुस्तकम् ।

३ श्रीमुनिना अमिविजयेन महाशयेनापिपुस्तकमेकं समर्पितम् ।

४ श्रीकेशरविजयमुनितोपि पुस्तकमेकं समासादितम् ।

५ भावनगरस्थश्राद्धवर्य्य कुंवरजी आनन्दजी इत्यनेन श्रावकेनात्र महती सहायता दत्ता ।

६ श्रीपं. अम्बादत्तशास्त्रिणां समीपेपुस्तमेकमाप्तम् ।

पूर्वोक्तमहाशयानां भूयांसं परिश्रमं चोपकृतिं च तेषां सप्रश्रयमङ्गीकरोतीयं पाठशाला ।

यद्यपि पूर्वोक्तानि पुस्तकानि दृष्ट्वा शोधितोयं ग्रन्थस्तथापि मनुष्यसहभूर्भ्रान्तिर्दुर्वारा तदत्र दृष्टिदोषात् शीशकाक्षरयोजनदोषाद् वा या काचना ऽशुद्धिर्भवेत् तत्स्वपुस्तके परिमृज्य कृपया पाठशालामपि सूचयेयुः सज्जनाः

इतिप्रार्थयते

काशीस्थजैनयशोविजयसंस्कृतपाठशाला ।



॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

## प्रथमः परिच्छेदः ।

—:०:—

रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।
शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये ॥ १ ॥

प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते १ ॥

स्वपरव्यवसायिज्ञानं प्रमाणम् ॥ २ ॥

अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणमतोज्ञानमेवेदम् ॥ ३ ॥

नवै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नंत-

स्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतम-त्वानुपपत्तेः ॥ ४ ॥

नखल्वस्य स्वनिर्णीतौ करणत्वं स्तंभादेरि-वाचेतनत्वात् नाप्यर्थनिश्चितौ स्वनिश्चि-तावकरणस्य कुंभादेरिवतत्राप्यकरणत्वात् ५॥

तद् व्यवसायस्वभावं समारोपपरिपन्थित्वात्-प्रमाणत्वाद्वा ॥ ६ ॥

अतस्मिंस्तदध्यवसायः समारोपः ॥ ७ ॥

सविपर्ययसंशयानध्यवसायभेदात्त्रेधा ॥८॥

विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥ ९ ॥

यथा शुक्तिकायामिदं रजतमिति ॥१०॥

साधकबाधकप्रमाणाभावादनवस्थिता-नेककोटिसंस्पर्शिज्ञानं संशयः ॥ ११ ॥

यथाऽयं स्थाणुर्वा पुरुषोवेति ॥ १२ ॥

किमित्यालोचनमात्रमनध्यवसायः ॥१३॥

यथागच्छतस्तृणस्पर्शज्ञानम् ॥ १४॥

ज्ञानादन्योऽर्थः परः ॥ १५॥

स्वस्य व्यवसायःस्वाभिमुख्येन प्रकाशनं बाह्यस्येवतदाभिमुख्येन करिकलभकमहमात्मनाजानामीति ॥ १६॥

कः खलुज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपितत्प्रकारं नाभिमन्येत मिहिरालोकवत् ॥ १७॥

ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम् १८॥

तदितरत्त्वप्रामाण्यम् ॥ १९॥

तदुभयमुत्पत्तौ परतएव ज्ञप्तौ तु स्वतः परतश्चेति ॥ २०॥

श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

# अथ द्वितीयः परिच्छेदः

तद्विभेदं प्रत्यक्षं च परोक्षं च ॥ १ ॥

स्पष्टं प्रत्यक्षम् ॥ २ ॥

अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥ ३ ॥

तद्विप्रकारं सांव्यवहारिकं पारमार्थिकं च॥४॥

तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥ ५ ॥

एतद्वितयमवग्रहेहावायधारणाभेदादेकश[1]श्चतुर्विकल्पकम् ॥ ६ ॥

विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः ॥७॥

अवगृहीतार्थविशेषाकाङ्क्षणमीहा ॥८॥

१ 'एकैकश'' इत्यपिपाठान्तरम् ।

ईहितविशेषनिर्णयोऽवायः ॥ ९ ॥

सएवदृढतमावस्थापन्नोधारणा ॥ १० ॥

संशयपूर्वकत्वादीहायाः संशयाद्भेदः ॥ ११ ॥

कथञ्चिदभेदेऽपिपरिणामविशेषादेषां व्यपदेशभेदः ॥ १२ ॥

असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतयाऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥ १३ ॥

क्रमोप्यमीषामयमेव तथैवसंवेदनात् ॥ १४ ॥

एवंक्रमाविर्भूतनिजकर्म्मक्षयोपशमजन्यत्वाच्च ॥ १५ ॥

अन्यथाप्रमेयानवगतिप्रसङ्गः ॥ १६ ॥

तथाहि नखल्वदृष्टमवगृह्यते नचानवगृहीतं-

सन्दिह्यते नचासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेतं धार्यते ॥ १७ ॥

क्वचित् क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १८ ॥

पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् १९॥

तद्विकलं सकलं च ॥ २० ॥

तत्र विकलमवधिमनःपर्यायज्ञानरूपतया द्वेधा ॥ २१ ॥

अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम्॥२२॥

संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् ॥ २३ ॥

सकलंतुसामग्रीविशेषतः समुद्भूतसमस्ताव-

रणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारि-
स्वरूपं केवलज्ञानम् ॥२४॥

तद्वानर्हन्निर्दोषत्वात् ॥२५॥

निर्दोषोसौ प्रमाणाविरोधिवाक्त्वात्॥२६॥

तदिष्टस्यप्रमाणेनाबाध्यमानत्वात् तद्वा-
चस्तनाविरोधसिद्धिः ॥२७॥

नच कवलाहारवत्वेन तस्यासर्वज्ञत्वं कवला-
हारसर्वज्ञत्वयोरविरोधात् ॥२८॥

इतिप्रत्यक्षस्वरूपनिर्णयोनाम द्वितीयः
परिच्छेदः ॥ २ ॥

---

## अथ तृतीयः परिच्छेदः

---

अस्पष्टं परोक्षं स्मरणप्रत्यभिज्ञानतर्कानुमा-
नागमभेदतस्तत्पञ्चप्रकारं तत्रसंस्कारप्र-

बोधसंभूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम् ॥ १ ॥

तत्तीर्थकरबिम्बमिति यथा ॥ २ ॥

अनुभवस्मृतिहेतुकं तिर्यगूर्द्ध्वतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम् ३

यथा तज्जातीयएवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि ॥ ४ ॥

उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन् सत्येवभवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ॥ ५ ॥

यथा यावान् कश्चित्धूमःस सर्वोवह्नौसत्येवभवतीति तस्मिन्नसत्यसौ नभवत्येवेति ६॥

अनुमानं द्विप्रकारं स्वार्थं परार्थं च ॥ ७ ॥

तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्य-
विज्ञानं स्वार्थम् ॥ ८ ॥

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ९ ॥

न तु त्रिलक्षणकादिः ॥ १० ॥

तस्य हेत्वाभासस्यापि सम्भवात् ॥ ११ ॥

अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १२ ॥

शङ्कितविपरीतानध्यवसितवस्तूनां साध्य-
ताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥ १३ ॥

प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यता-
मित्यनिराकृतग्रहणम् ॥ १४ ॥

अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सित-
पदोपादानम् ॥ १५ ॥

व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्य-
था तदनुपपत्तेः ॥ १६ ॥

नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥ १७ ॥

आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धोधर्म्मी ॥१८॥

धर्म्मिणः प्रसिद्धिः क्वचिद्विकल्पतः कुत्रचित्प्रमाणतःक्वापि विकल्पप्रमाणाभ्याम् १९

यथा समस्तिसमस्तवस्तुवेदी क्षितिधरकन्धरेयंधूमध्वजवती ध्वनिः परिणतिमानिति२०॥

पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ॥ २१ ॥

साध्यस्य प्रतिनियतधर्म्मिसंबन्धिता प्रसिद्धये हेतोरुपसंहारवचनवत्पक्षप्रयोगोप्यवश्यमाश्रयितव्यः ॥२२॥

त्रिविधं साधनमभिधायैव तत्समर्थनं विद-

धानः कः खलु न पक्षप्रयोगमङ्गीकुरुते ॥ २३ ॥

प्रत्यक्षपरिच्छिन्नार्थाभिधायिवचनं परार्थं प्रत्यक्षं परप्रत्यक्षहेतुत्वात् ॥ २४ ॥

यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति २५ ॥

पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनम् ॥ २६ ॥

हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः ॥ २७ ॥

सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः । असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः २८

यथा कृशानुमानयंपाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति २९

अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यैकत्रानुपयोगः ॥ ३० ॥

नदृष्टान्तवचनं परप्रतिपत्तये प्रभवति तस्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ३१

नच हेतोरन्यथानुपपत्तिनिर्णीतये यथोक्ततर्कप्रमाणादेव तदुपपत्तेः ॥ ३२ ॥

नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षायामनवस्थितेर्दुर्निवारः समवतारः ॥ ३३ ॥

नाप्यविनाभावस्मृतये प्रतिपन्नप्रतिबन्धस्य व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः

अन्तर्व्याप्त्या हेतोःसाध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥ ३५॥

पक्षीकृतएवविषये साधनस्य साध्येन व्याप्ति-

रन्तर्व्याप्तिरन्यत्रतुबहिर्व्याप्तिः यथाऽनेका-
न्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः। अग्नि-
मानयं देशो धूमवत्त्वात् य एवं स एवं
यथा पाकस्थानम् ॥ ३६ ॥

नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं
पक्षहेतुप्रयोगादेव तस्याः सद्भावात् ॥३७॥

समर्थनमेवपरंपरप्रतिपत्त्यङ्गमास्तां तदन्तरेण
दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥३८॥

मन्दमतींस्तुव्युत्पादयितुं दृष्टान्तोपनयनि-
गमनान्यपि प्रयोज्यानि ॥३९॥

प्रतिबन्धप्रतिपत्तेरास्पदं दृष्टान्तः ॥४०॥

स द्वेधा साधर्म्यतो वैधर्म्यतश्च ॥४१॥

यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता
प्रकाश्यते स साधर्म्यदृष्टान्तः॥ ४२॥

यथा यत्र धूमस्तत्र वह्निर्यथा महानसः॥४३॥

यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते स वैधर्म्यदृष्टान्तः ॥ ४४ ॥

यथाग्न्यभावे न भवत्येव धूमो यथा जलाशये ४५

हेतोः साध्यधर्मिण्युपसंहरणमुपनयः ॥४६॥

यथा धूमश्चात्र प्रदेशे ॥४७॥

साध्यधर्मस्य पुनर्निगमनम् ॥४८॥

यथा तस्मादग्निरत्र ॥४९॥

एते पक्षप्रयोगादयः पञ्चाप्यवयवसंज्ञया कीर्त्यन्ते ॥५०॥

उक्तलक्षणो हेतुर्द्विप्रकारः उपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५१॥

उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५२॥

त्रिविधः सदंशः प्रतिषेधोऽसदंशः ॥५३॥

स चतुर्द्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥५४॥

यन्निवृत्तावेव कार्यस्य समुत्पत्तिः सोऽस्य प्रागभावः ॥५५॥

यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥५६॥

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥५७॥

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥५८॥

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः ५९

यथा स्तंभस्वभावात् कुंभस्वभावव्यावृत्तिः ६०

कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः ॥६१॥

यथा चेतनाऽचेतनयोः ॥६२॥

उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च ॥ ६३ ॥

तत्राऽविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ६४॥

साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति॥६५॥

तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यञ्च६६

पूर्वचरोत्तरचरयोर्नस्वभावकार्यकारणभावौ-तयोः कालव्यवहितावनुपलम्भात्॥ ६७ ॥

नचातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोःप्रबोधोत्पातौ प्रति कारणत्वं व्यवहि-

तत्त्वेन निर्व्यापारत्वात् ॥६८॥

स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रति ॥ ६९ ॥

न च व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेः ॥ ७० ॥

परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥ ७१ ॥

सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेन तदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः ॥७२

ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वात् यः प्रयत्नानन्तरीयकः स परिणतिमान् यथा स्तम्भो यो वा न परिणतिमान् स न प्रयत्नान-

न्तरीयको यथा वान्ध्येयः प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येणच ॥ ७३ ॥

अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्य ॥ ७४ ॥

भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्य ॥ ७५ ॥

उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्य ॥ ७६ ॥

उदगुर्मुहूर्त्तात्पूर्वं पूर्वफल्गुन्य उत्तरफल्गुनीनामुद्गमोपलब्धेरित्युत्तरचरस्य ॥ ७७ ॥

अस्तीह सहकारफले रूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्य ॥ ७८ ॥

विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्तप्रकारा ॥ ७९ ॥

तत्राद्या स्वभावविरुद्धोपलब्धिर्यथा ॥ ८० ॥

नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भात् ८१

प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षट् ८२

विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्रसन्देहात् ॥ ८३ ॥

विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेः ॥ ८४ ॥

विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं वचः समस्ति रागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वात् ॥ ८५ ॥

विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते पुष्यतारा रोहिण्युद्गमात् ॥ ८६ ॥

विरुद्धोत्तरचरोपलब्धिर्यथा नोदगान् मुहूर्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयात् ॥८७॥

विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनात् ॥ ८८ ॥

अनुपलब्धेरपि द्वैरूप्यमविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च ॥ ८९ ॥

तत्राविरुद्धानुपलब्धिःप्रतिषेधावबोधे सप्तप्रकारा ॥ ९०॥

प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिरिति ॥ ९१ ॥

स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥ ९२ ॥

व्यापकानुपलब्धिर्यथा नास्त्यत्रप्रदेशे पनसः पादपानुपलब्धेः ॥ ९३ ॥

कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्तिकं बीजमङ्कुरानवलोकनात् ॥ ९४ ॥

कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्रभृतयोभावास्तत्त्वार्थश्रद्धानाभावात् ॥९५॥

पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते स्वातिनक्षत्रं चित्रोदयादर्शनात् ॥९६॥

उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभद्रपदा मुहूर्त्तात्पूर्वमुत्तरभद्रपदोद्गमानवगमात् ॥ ९७ ॥

सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलब्धेः ॥ ९८ ॥

विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा ९९

विरुद्धकार्यकारणस्वभावव्यापकसहचरा-
नुपलम्भभेदात् ॥१००॥

विरुद्धकार्यानुपलब्धिर्यथाऽत्रशरीरिणि रो-
गातिशयः समस्ति निरोगव्यापारानुपल-
ब्धेः ॥१०१॥

विरुद्धकारणानुपलब्धिर्यथा विद्यते ऽत्र प्रा-
णिनि कष्टमिष्टसंयोगाभावात् ॥१०२॥

विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमने-
कान्तात्मकमेकान्तस्वभावानुपलम्भात्१०३

विरुद्धव्यापकानुपलब्धिर्यथा ऽस्त्यत्र च्छा-
या औष्ण्यानुपलब्धेः ॥ १०४ ॥

विरुद्धसहचरानुपलब्धिर्यथा ऽस्त्यस्य मि-
थ्याज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०५॥

इतिस्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूप-
निर्णयोनामतृतीयः परिच्छेदः ॥ ३ ॥

आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ॥१॥

उपचारादाप्तवचनञ्च ॥ २ ॥

यथा समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्नसानुप्रभृतयः ॥ ३ ॥

अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञातञ्चाभिधत्ते स आप्तः ॥ ४ ॥

तस्य हि वचनमविसंवादि भवति ॥ ५ ॥

सच द्वेधा लौकिकोलोकोत्तरश्च ॥ ६ ॥

लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादिः ॥ ७ ॥

वर्णपदवाक्यात्मकं वचनम् ॥ ८॥

अकारादिः पौद्गलिको वर्णः ॥९ ॥

वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदं पदानान्तु वाक्यम् ॥ १०॥

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्दः ॥ ११॥

अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवत् यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनुसरतः ॥ १२ ॥

सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थमभिदधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥

एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोःसमस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितःसप्तधावाक्प्रयोगः सप्तभङ्गी ॥ १४ ॥

तद्यथा स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमोभङ्गः ॥ १५ ॥

स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः ॥ १६ ॥

स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः ॥ १७ ॥

स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ॥ १८ ॥

स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः १९

स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः २०

स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमइति ॥ २१ ॥

विधिप्रधानएव ध्वनिरिति न साधु ॥ २२ ॥

निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥ २३ ॥

अप्राधान्येनैव ध्वनिस्तमभिधत्तइत्यप्यसारम् २४

क्वचित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिपन्नस्य तस्याप्राधान्यानुपपत्तेः ॥ २५ ॥

निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्यायादपास्तम् ॥ २६ ॥

क्रमादुभयप्रधान एवायमित्यपि न साधीयः २७

अस्य विधिनिषेधाऽन्यतरप्रधानत्वानुभवस्याप्यबाध्यमानत्वात् ॥ २८ ॥

युगपद्विधिनिषेधात्मनोऽर्थस्यावाचक एवासौ इतिवचो न चतुरस्रम् ॥ २९ ॥

तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ३०

विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपदवाचक एव स इत्येकान्तोपि न कान्तः ३१

निषेधात्मनः सहद्वयात्मनश्चार्थस्य वाचकत्वावाचकत्वाभ्यामपि शब्दस्य प्रतीयमानत्वात् ॥ ३२ ॥

निषेधात्मनो ऽर्थस्य वाचकः सन्नुभयात्मनो युगपद्वाचकएवायमित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥

इतरथापि संवेदनात् ॥ ३४ ॥

क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चावाचकश्च ध्वनिर्नान्यथा इत्यपि मिथ्या ॥ ३५ ॥

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ३६

एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तून्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ३८

प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्ता-

नामेव संभवात् ॥ ३९ ॥

तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

तस्या ऽपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्याऽपिसप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥४२॥

इयंसप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥

प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचःसकलादेशः ४४

तद्विपरीतस्तु विकलादेशः ॥ ४५ ॥

तद्धि भेदमपिप्रमाणमात्मीयप्रतिबन्धकाप-

गमविशेषस्वरूपसामर्थ्यतः प्रतिनियतमर्थमवद्योतयति ॥ ४६॥

नतदुत्पत्तितदाकारताभ्यां तयोःपार्थ्यक्येन सामस्त्येन च व्यभिचारोपलम्भात्॥४७॥

इति आगमाख्यप्रमाणस्वरूपनिर्णयोनामचतुर्थः परिच्छेदः ४

तस्य विषयः सामान्यविशेषाद्यनेकान्तात्मकं वस्तु ॥ १ ॥

अनुगतविशिष्टाकारप्रतीतिविषयत्वात् प्राचीनोत्तराकारपरित्यागोपादानावस्थानस्वरूपपरिणत्यार्थक्रियासामर्थ्यघटनाच्च २

सामान्यं द्विप्रकारं तिर्यक्सामान्यमूर्द्धतासामान्यञ्च ॥ ३ ॥

प्रतिव्यक्तितुल्यापरिणतिस्तिर्यक्सामान्यं शवलशाबलेयादिपिण्डेषु गोत्वं यथा॥४॥

पूर्वापरपरिणामसाधारणंद्रव्यमूर्द्धतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवत् ।.५॥

विशेषोपि द्विरूपो गुणः पर्यायश्च ॥ ६॥

गुणः सहभावीधर्मो यथात्मनि विज्ञानव्यक्तिशक्त्यादिः ॥ ७॥

पर्यायस्तूक्रमभावी यथातत्रैवसुखदुःखादिः८

इतिविषयस्वरूपनिर्णयोनामपञ्चमः परिच्छेदः ।

यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥ १ ॥

तद्विविधमानन्तर्येण पारम्पर्येण च ॥ २ ॥

तत्राऽऽनन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥ ३ ॥

पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥ ४ ॥

शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥ ५ ॥

तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः ॥ ६ ॥

उपादानबुध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन हेतोर्व्यभिचारइति न विभावनीयम् ॥ ७ ॥

तस्यैकप्रमातृतादात्म्येन प्रमाणादभेदव्यवस्थितेः ॥ ८ ॥

प्रमाणतया परिणतस्यैवात्मनः फलतया परिणतिप्रतीतेः ॥ ९ ॥

यः प्रमिमीते स एवोपादत्ते परित्यजत्युपेक्ष-

तं चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् ॥ १० ॥

इतरथा स्वपरयोः प्रमाणफलव्यवस्थाविप्लवः प्रसज्येत ॥ ११ ॥

अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्तइति नाशङ्कनीयम् ॥ १२ ॥

कथञ्चित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानात् १३

साध्यसाधनभावेन प्रमाणफलयोःप्रतीयमानत्वात् ॥ १४ ॥

प्रमाणंहि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वात् ॥ १५ ॥

स्वपरव्यवसितिक्रियारूपाऽज्ञाननिवृत्त्याख्यं फलंतु साध्यं प्रमाणनिष्पाद्यत्वात् ॥ १६ ॥

प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथञ्चिद्भेदः ॥ १७॥

कर्तृक्रिययोःसाध्यसाधकभावेनोपलम्भात् ॥ कर्त्ता हि साधकः स्वतन्त्रत्वात् क्रियातु साध्या कर्तृनिर्वर्त्यत्वात् ॥१९॥

न च क्रियाक्रियावतः सकाशादभिन्नैव भिन्नैव वा प्रतिनियतक्रियाक्रियावद्भावभङ्गप्रसङ्गात् ॥ २० ॥

संवृत्या प्रमाणफलव्यवहार इत्यप्रामाणिकप्रलापः परमार्थतः स्वाभिमतसिद्धिविरोधात् ॥ २१ ॥

ततः पारमार्थिक एव प्रमाणफलव्यवहारः सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्यः।२२।

प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीतं तदा-

भासम् ॥ २३ ॥

अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ॥ २४ ॥

यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसंशयानध्यवसायाः ।

तेभ्यः स्वपरव्यवसायस्यानुपपत्तेः ॥ २६ ॥

सांव्यवहारिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २७ ॥

यथाऽम्बुधरेषु गन्धर्वनगरज्ञानं दुःखे सुखज्ञानञ्च ॥ २८ ॥

पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २९ ॥

यथाशिवाख्यस्य राजर्षेरसंख्यातद्वीपसमु-

द्वेषु सप्तद्वीपसमुद्रज्ञानम् ॥ ३० ॥

अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभासम् ॥ ३१ ॥

अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथा

तुल्ये पदार्थे स एवायमित्येकस्मिंश्च तेन तुल्य इत्यादिज्ञानं प्रत्यभिज्ञाभासम्॥३३॥

यमलकजातवत् ॥३४॥

असत्यामपि व्याप्तौ तदवभासस्तर्काभासः३५

सश्यामो मैत्रतनयत्वात् इत्यत्र यावान् मैत्रतनयः सश्यामः इति यथा ॥३६॥

पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमवसेयम् ॥३७॥

तत्र प्रतीतानिराकृतानभीप्सितसाध्यधर्मविशेषणास्त्रयः पक्षाभासाः ॥३८॥

प्रतीतसाध्यधर्म्मविशेषणो यथाऽर्हतान् प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्तिजीव इत्यादि ॥३९॥

निराकृतसाध्यधर्मविशेषणः प्रत्याक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य निराकरणादनेकप्रकारः ॥ ४० ॥

प्रत्यक्षनिराकृतसाध्यधर्म्मविशेषणो यथा नास्तिभूतविलक्षणआत्मा ॥ ४१ ॥

अनुमाननिराकृतसाध्यधर्मविशेषणो यथा नास्ति सर्वज्ञो वीतरगो वा ॥४२॥

आगमनिराकृतसाध्यधर्मविशेषणो यथा जैनै रजनिभोजनं भजनीयम् ॥४३॥

लोकनिराकृतसाध्यधर्म्मविशेषणो यथा नापारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥४४॥

स्ववचननिराकृतसाध्यधर्म्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदकं प्रमाणम् ॥४५॥

अनभीप्सितसाध्यधर्म्मविशेषणो यथा स्याद्वादिनः शाश्वतिकएव कलशादिरशाश्वतिक एवेति वदतः ॥४६॥

असिद्धविरुद्धानैकान्तिकास्त्रयोहेत्वाभासाः ॥ ४७ ॥

यस्यान्यथानुपपत्तिः प्रमाणेन न प्रतीयतेसोऽसिद्धः ॥४८॥

सद्द्विविध उभयासिद्धोऽन्यतरासिद्धश्च ४९

उभयासिद्धो यथा परिणामीशाब्दश्चाक्षुषत्वात् ॥५०॥

अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ।५१।

साध्यविपर्ययेणैव यस्यान्यथानुपपत्तिरध्यव-सीयते स विरुद्धः ॥५२॥

यथा नित्यएव पुरुषोऽनित्यएव वा प्रत्यभि ज्ञानादिमत्त्वात् ॥५३॥

यस्यान्यथानुपपत्तिः सन्दिह्यते सोऽनैका-न्तिकः ॥ ५४ ॥

सद्वेधा निर्णीतविपक्षवृत्तिकः सन्दिग्ध-विपक्षवृत्तिकश्च ॥ ५५ ॥

निर्णीतविपक्षवृत्तिको यथा नित्यः शब्दः प्रमेयत्वात् ॥५६॥

सन्दिग्धविपक्षवृत्तिको यथा विवादापन्नः पुरुषः सर्वज्ञो न भवति वक्तृत्वात् ॥५७॥

साधर्म्येण दृष्टान्ताभासोनवप्रकारः ॥५८॥

साध्यधर्मविकलः साधनधर्मविकलः उभ-

यधर्म्मविकलः सन्दिग्धसाध्यधर्म्मा सन्दिग्धसाधनधर्म्मा सन्दिग्धोभयधर्म्मानन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ५९।

तत्रापौरुषेयः शब्दोऽमूर्त्तत्वाद्दुःखवदिति साध्यधर्म्मविकलः ॥ १ ॥ ६० ॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमाणुवदिति साधनधर्म्मविकलः ॥ १॥६१॥

कलशवदित्युभयधर्म्मविकलः ॥ १ ॥ ६२॥

रागादिमानयं वक्तृत्वाद्देवदत्तवदिति सन्दिग्धसाध्यधर्मा ॥ ३ ॥ ६३ ॥

मरणधर्मायं रागादिमत्वान् मैत्रवदिति संदिग्धसाधनधर्मा ॥ ५ ॥६४॥

नायं सर्वदर्शी रागादिमत्त्वान्मुनिविशेषवदिति सन्दिग्धोभयधर्मा । ६ । ६५ ॥

रागादिमान् विवक्षितः पुरुषोवक्तृत्वादिष्ट-पुरुषवदित्यनन्वयः । ७ । ६६ ॥

अनित्यः शब्दः कृतकत्वात् घटवदित्य-प्रदर्शितान्वयः । ८ । ६७ ॥

अनित्यः शब्दः कृतकत्वात् यदनित्यं तत् कृतकं घटवदिति विपरीतान्वयः।९।६८॥

वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥६९॥

असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यतिरेकोऽसिद्धोभयव्यतिरेकः सन्दिग्धसाध्यव्यतिरेकः सन्दिग्धसाधनव्यतिरेकः सन्दिग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्यतिरेको विपरीतव्यतिरेकश्च ॥ ७० ॥

तेषु भ्रान्तमनुमानं प्रमाणत्वात्यत्पुनर्भ्रान्तं न भवति न तत् प्रमाणं यथा स्वप्नज्ञानमिति

असिद्धसाध्यव्यतिरेकः स्वप्न ज्ञानात् भ्रान्तत्वस्यानिवृत्तेः । १ । ७१ ॥

निर्विकल्पकं प्रत्यक्षं प्रमाणत्वाद्यत्तु सविकल्पकं न तत्प्रमाणं यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः । २ । ७२ ॥

नित्यानित्यःशब्दः सत्वात् यस्तु न नित्यानित्यः सनसंस्तद्यथा स्तम्भ इत्यसिद्धोभयव्यतिरेकः स्तम्भान्नित्यान्नित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः । ३ । ७३ ॥

असर्वज्ञोऽनाप्तो वा कपिलोऽक्षीणकैकान्तवादित्वाद्यः सर्वज्ञ आप्तो वा सक्षणिकैकान्तवादी यथासुगत इति सान्दिग्धसाध्यव्यतिरेकः सुगतेऽसर्वज्ञतानाप्तत्वयोः साध्य-

धर्म्मियोर्व्यावृत्तेः सन्देहात् । ४ । ७४ ॥

अनादेयवचनः कश्चिद्विवक्षितः पुरुषोरागा-दिमत्त्वाद्यः पुनरादेयवचनः स वीतराग-स्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधन-व्यतिरेकः शौद्धोदनौ रागादिमत्त्वस्य निवृत्तेः संशयात् । ७५॥५॥

नवीतरागः कापिलः करुणास्पदेष्वपि परम-कृपयाऽनर्प्पितनिजपिशितशकलत्वात् य-स्तुवीतरागः सकरुणास्पदेषुपरमकृपया स-मर्प्पितनिजपिशितशकलस्तद्यथातपनबन्धु-रितिसन्दिग्धोभयव्यतिरेकः तपनबन्धौवीत-रागत्वाभावस्य करुणास्पदेष्वपि परमकृपया-नर्प्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् । ६ ॥ ७६ ॥

न वीतरागः कश्चिद्विवक्षितः पुरुषोवक्तृत्वात् यः पुनर्वीतरागो न स वक्ता यथोपलखण्डइत्यव्यतिरेकः । ७७ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वादाकाशवदित्यप्रदर्शितव्यतिरेकः । ७८ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वाद्यदकृतकं तन्नित्यं यथाकाशमिति विपरीतव्यतिरेकः ।७९॥३॥

उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने तदाभासौ ॥ ८० ॥

यथापरिणामीशब्दः कृतकत्वाद्यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति च ८१।

तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्द इति तस्मात्परिणामी कुम्भ इति वा ॥८२॥

अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ।८३।
यथा मेकलकन्यकायाः कूले तालहिंतालयोर्मूलेसुलभाः पिण्डखर्जूराः सन्तित्वरितं गच्छत २ शावकाः ॥ ८४ ॥

प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्यानं तस्य संख्याभासम् ॥ ८५ ॥

सामान्यमेव विशेषएव तद्द्वयं वा स्वतन्त्रमित्यादिस्तस्य विषयाभासः ॥ ८६ ॥

अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासम् ॥ ८७ ॥

इति फलप्रमाणस्वरूपाद्याभासनिर्णयोनाम षष्ठः परिच्छेदः ॥ ६ ॥

नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थ-
स्यांशस्तदितरांशौदासीन्यतः सप्रतिपत्तुर-
भिप्रायविशेषोनयः ॥ १ ॥

स्वाभिप्रेतादंशादितरांशापलापी पुनर्नया-
भासः ॥ २ ॥

सव्याससमासाभ्यान्द्विप्रकारः ॥ ३ ॥

व्यासतोऽनेकविकल्पः ॥ ४ ॥

समासतस्तुद्विभेदो द्रव्यार्थिकः पर्यायार्थि-
कश्च ॥ ५ ॥

आद्यो नैगमसंग्रहव्यवहारभेदात्त्रेधा ॥६॥

धर्म्मयोर्धर्म्मिणोर्धर्म्मधर्म्मिणोश्चप्रधानोप-
सर्जनभावेन यद्विवक्षणं सनैकगमोनै-
गमः ॥ ७ ॥

सच्चैतन्यमात्मनीतिधर्म्मयोः ॥ ८ ॥

वस्तुपर्यायवद्द्रव्यं इति धर्म्मिणोः ॥ ९ ॥

क्षणमेकं सुखीविषयासक्तजीवइति धर्म-धर्म्मिणोः ॥ १० ॥

धर्मद्वयादीनामैकान्तिकपार्थक्याभिसन्धि-नैगमाभासः ॥ ११ ॥

यथात्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग्भूते इत्यादि ॥ १२ ॥

सामान्यमात्रग्राही परामर्शः संग्रहः ॥१३॥

अयमुभयविकल्पः परोऽपरश्च ॥ १४ ॥

अशेषविशेषेष्वौदासीन्यम्भजमानः शुद्धद्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः १५

विश्वमेकं सदविशेषादिति यथा ॥ १६ ॥

सत्ताद्वैतं स्वीकुर्वाणः सकलविशेषान्निराचक्षाणस्तदाभासः ॥ १७ ॥

यथासत्तैव तत्त्वन्ततः पृथग्भूतानां विशेष-
णामदर्शनात् ॥ १८ ॥

द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वा-
नस्तद्भेदेषु गजनिमीलिकामवलम्बमानः
पुनरपरसंग्रहः ॥ १९ ॥

धर्माधर्माकाशकालपुद्गलजीवद्रव्याणा-
मैक्यं द्रव्यत्वाभेदादित्यादिर्यथा ॥ २० ॥

द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नु-
वानस्तदाभासः ॥ २१ ॥

यथा द्रव्यत्वमेव तत्त्वं ततोऽर्थान्तरभूतानां
द्रव्याणामनुपलब्धेः ॥ २२ ॥

संग्रहेण गोचरीकृतानामर्थानां विधिपूर्व-
कमवहरणं येनाभिसन्धिना क्रियते स व्य-
वहारः ॥ २३ ॥

यथा यत्सत्तद्द्रव्यं पर्यायो वेत्यादि ॥२४॥

यः पुनरपारमार्थिकद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः ॥ २५ ॥

यथा चार्वाकदर्शनम् ॥ २६ ॥

पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ॥ २७ ॥

ऋजुवर्त्तमानक्षणस्थायिपर्यायमात्रंप्राधान्यतः सूत्रयन्नभिप्राय विशेष ऋजुसूत्रः ॥ २८ ॥

यथासुखविवर्त्तः सम्प्रत्यस्तीत्यादि ॥२९॥

सर्वथाद्रव्यापलापीतदाभासः ॥ ३० ॥

यथा तथागतमतम् ॥ ३१ ॥

कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः ॥ ३२ ॥

यथा बभूव भवति भविष्यति सुमेरुरित्यादिः।

तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः ३४
यथा बभूव भवति भविष्यति सुमेरुरित्यादयोभिन्नकालः शब्दाभिन्नमेवार्थमभिदधति भिन्नकालशब्दत्वात्तादृक्सिद्धान्यशब्दवदित्यादिः ॥ ३५ ॥
पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहन्समभिरूढः ॥ ३६ ॥
इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरन्दर इत्यादिषु यथा ॥ ३६ ॥
पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणस्तदाभासः ॥ ३७ ॥
यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दाभिन्नाभिधेयाएव भिन्नशब्दत्वात् करिकुरङ्गतुरङ्गशब्दवदित्यादिः ॥ ३८ ॥

शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियावि-
ष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ।३९।

यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः
शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ।४०।

क्रियानाविष्टं वस्तुशब्दवाच्यतया प्रतिक्षिपं-
स्तुतदाभासः ॥ ४२ ॥

यथाविशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घट-
शब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रि-
याशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥

एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थ
नयाः शेषास्तुत्रयः शब्दवाच्यार्थगोचरतया
शब्दनयाः ॥ ४४ ॥

पूर्वः पूर्वोनयः प्रचुरगोचरः परः परस्तु परि-
मितविषयः ॥ ४५ ॥

सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभू-
मिकत्वात् भूमविषयः ॥ ४६ ॥

सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्त-
सत्समूहोपदर्शकत्वात्बहुविषयः ॥ ४७ ॥

वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकाल-
विषयावलम्बित्वादनल्पार्थः ॥ ४८ ॥

कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृ-
जुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥ ४९ ॥

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभि-
रूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूत-
विषयः ॥ ५० ॥

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभू-
तात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महा-
गोचरः ॥ ५१ ॥

नयवाक्यमपि स्वविषये प्रवर्त्तमानं विधि-
प्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५२ ॥

प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥५३॥

प्रमाताप्रत्यक्षादिप्रसिद्धआत्मा ॥ ५४ ॥

चैतन्यस्वरूपः परिणामीकर्त्ता साक्षाद्भोक्ता-
स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलि-
कादृष्टवांश्चायम् ॥ ५५ ॥

तस्योपात्तपुंस्त्रीशरीरस्य सम्यग्ज्ञानक्रियाभ्यां
कृत्स्नकर्मक्षयस्वरूपासिद्धिः ॥ ५६ ॥

इति श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वा-
लोकालङ्कारेनयात्मस्वरूपनिर्णयो नाम
सप्तमः परिच्छेदः ॥ ७ ॥

अष्टमः परिच्छेदः ।

विरुद्धयोर्धर्म्मयोरेकधर्म्मव्यवच्छेदेनस्वीकृततदन्यधर्म्मव्यवस्थापनार्थं साधनदूषणवचनं वादः ॥ १ ॥

प्रारम्भकश्चात्र विजिगीषुस्तत्त्वनिर्णिनीषुश्च स्वीकृतधर्मव्यवस्थापनार्थं साधनदूषणाभ्यां परं पराजेतुमिच्छुर्जिगीषुः॥ ३ ॥

तथैव तत्त्वंप्रतितिष्ठापयिषुस्तत्त्वनिर्णिनीषुः ४

अयं च द्वेधा स्वात्मनि परत्र च ॥५ ॥

आद्यः शिष्यादिः ॥ ६ ॥

द्वितीयोगुर्वादिः ॥ ७ ॥

अयं द्विविधः क्षायोपशमिकज्ञानशाली केवली च ॥ ८ ॥

एतेन प्रत्यारम्भकोऽपि व्याख्यातः ॥ ९ ॥

तत्र प्रथमे प्रथमतृतीयतुरीयाणां चतुरङ्गए-

वान्यतमस्याप्यङ्गस्यापाये जयपराजयव्यव-
स्थादिदौःस्थ्यापत्तेः ॥१०॥

द्वितीये तृतीयस्य कदाचिद्व्यङ्गः कदाचित्त्र्यङ्गः
तत्रैव द्व्यङ्गस्तुरीयस्य ॥१२॥

तृतीये प्रथमादीनां यथायोगं पूर्ववत् ॥१३॥

तुरीये प्रथमादीनामेवम् ॥१४॥

वादिप्रतिवादिसभ्यसभापतयश्चत्वार्य्यङ्गानि

प्रारम्भकप्रत्यारम्भकावेव मल्लप्रतिमल्ल-
न्यायेन वादिप्रतिवादिनौ ॥ १६ ॥

प्रमाणतः स्वपक्षस्थापनप्रतिपक्षप्रतिक्षेपाव-
नयोः कर्म्म ॥१७॥

वादिप्रतिवादिसिद्धान्ततत्त्वनदीष्णत्वधार-
णाबाहुश्रुत्यप्रतिभाक्षान्तिमाध्यस्थैरुभयाभि-
मताःसभ्याः ॥ १८ ॥

वादिप्रतिवादिनोर्यथायोगं वाङ्स्थानक-
कथाविशेषाङ्गीकारेणाग्रवादोत्तरवादनिर्देशः
साधकबाधकोक्तिगुणदोषावधारणं यथा-
वसरन्तत्त्वप्रकाशनेन कथाविरमणं यथासंभ-
वं सभायांकथाफलकथनं चैषांकर्माणि ॥१९॥

प्रज्ञाज्ञैश्वर्यक्षमामाध्यस्थ्यसंपन्नः सभापतिः॥
वादिसभ्याभिहितावधारणकलहव्यपोहादिकं
चास्य कर्म्म ॥२१॥

सजिगीषुकेऽस्मिन्यावत्सभ्यापेक्षं स्फूर्तौवक्त-
व्यम् ॥ २२ ॥

उभयोस्तत्त्वनिर्णिनीषुत्वेयावत्तत्त्वनिर्णयं
यावत्स्फूर्त्तिं च वाच्यम् ॥ २३ ॥

इतिश्रीदेवाचार्यनिर्मितेप्रमाणनयतत्त्वालोका-
लङ्कारेवादिप्रतिवादिन्यायनिर्णयोनामाष्टमः
परिच्छेदः ॥ ८ ॥

शास्त्रविशारद-जैनाचार्य-श्रीविजयधर्म-सूरिभ्यो नमः ।

अर्हम्

श्रीजैनयशोविजयग्रन्थमाला [१२]



श्रीहर्षकुलगणिविरचितः

# कविकल्पद्रुमः ।

मुम्बयी-
वास्तव्यश्रेष्ठि-श्रीचुन्नीलाल-पन्नालाल-साहाय्येन
काशीस्थश्रीयशोविजयजैनपाठशालातः
प्रकाशितः ।

Printed by Gauri Shanker Lal, at C. P. Press, Benares City,
Published by Harakh Chand Bhoora Bhai.

वीर सं० [illegible]





अर्हम्

श्रीहर्षकुलगणिः ।

कोऽसाविति पृच्छा, सन्दर्भस्यास्य प्रतिपल्लवान्ते स्वयमेव पर्य्यवस्यति, किन्तु सोऽयं जैनश्वेताम्बरयतिग्रामण्यग्रणीः कस्मिन् समये संबभूवेत्यनुयोगे प्रतिवाक्यमित्थमुपदा क्रियते भवद्भ्यः ।

यत्प्रशस्तिवाक्ये "इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्टप्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठश्रीहेमाविमलसूरिविजयमानराज्ये मण्डितपण्डितपं—कुलचरणगणिशिष्यहर्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽनवद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि ग्रन्थे ........................," इति विन्यस्तमस्ति ।

पर्य्यालोचने चास्य 'श्रीहेमविमलसूरिविजयमानराज्ये' इति समस्तपदं विभास्वदुद्योते हीरकमणिरिव साम्प्रतमपि देदीप्यते । यतश्चास्यैव हेमविमलसूरेः समयविषये महामहोपाध्यायश्रीधर्मसागरवाचकनिर्मिततपागच्छपट्टावल्याम् :—

"श्रीसुमतिसाधुसूरिपट्टे पञ्चपञ्चाशत्तमः श्रीहेमविमलसूरिः । यः क्रियाशिथिलसाधुसमुदाये वर्तमानोऽपि साध्वाचारं नातिक्रान्तः । यतो ब्रह्मचर्येण, निष्परिग्रहतया च सर्वजनविख्यातो महायशस्वी संविग्नसाधुसान्निध्यकारी । यद्दीक्षिता

यन्निःसृताश्च बहवः साधवः क्रियापरायणा आसन् । एतत् चिन्हं समुदायानुरोधेन क्षमाश्रमणादिविहृतं पक्वान्नादिकं नात्मना भुक्तवान् । ऋ० हाना ऋ० श्रीपति ऋ० गणपतिप्रमुखा लुङ्कामतमपास्य श्रीहेमविमलसूरिपार्श्वे प्रव्रज्य तन्निश्रया चारित्रभाजो बभूवांसः । सद्युम्नं कश्चिद् व्रातिनं ज्ञात्वा गणान्निष्काशयामास । .......................................... तदानीं विक्रमसं० द्वाषष्ट्यधिकपञ्चदशशत १५६२ वर्षे सम्प्रति साधवो न दृक्पथमायान्तीत्यादिप्ररूपणापरकटुकनाम्नो गृहस्थात् त्रिस्तुतिकमतवासितोत्कटुकनाम्ना मतोत्पत्तिः । तथा वि० सं० सप्तत्यधिकपञ्चदशशत १५७० वर्षे लुङ्कामतान्निर्गत्य बीजाख्यवेषधरेण बीजामतीनाम्ना मतं प्रवर्तितम् । तथा वि० सं० द्विसप्तत्याधिकपञ्चदशशत १५७२ वर्षे नागपुरीयतपागणान्निर्गत्य उपाध्यायपार्श्वचन्द्रेण स्वनाम्ना मतं प्रादुष्कृतम्' इति लिखितमस्ति ।

तस्मात् वैक्रमीयषोडशशताब्दसमय एवासीदयमपि श्रीहर्षकुलगणिः ॥

इन्डियन् एन्टिक्वेरी The Indian Antiquary नामक पुस्तके Vol. XI Page 256 हिस्टॉरिकल् रिकॉर्डस् आफ् दि जैनाज् संबन्धे तु Hemavimala, Sam. 1562 the Katukamatam separated from the Tristutikamatam,-founder

of the Grihastha Katuka; Sam 1570 the *Vijamatam* from the Lunkamatam, influenced by the Veshadhara vija and S. 1572 from the Nagapuriyatapagana under the influence of Upadhyay Parsvachandra (or Pasachandra); the *matam,* called after him. इत्यादि यत्, तत् तपागच्छपट्टावल्यनुवादप्रायमेव लिखितमस्ति।

किञ्चैकादशपल्लवस्य स्वोपज्ञधातुचिन्तामणिटीकायाम्:- "नामधातुविशेषविस्तरस्तु श्रीगुणरत्नसूरीन्द्रविरचितक्रियारत्नसमुच्चयग्रन्थादवसातव्यः" इति गुणरत्नसूरीन्द्रस्य नाम निहितमस्ति।

गुणरत्नसूरीन्द्रस्तु क्रियारत्नसमुच्चयान्ते:—

"काले षड्रसपूर्ववत्सरमिते श्रीविक्रमार्काद्गते" इत्यादिना वि० सं० १४६६ मितं स्वयमेव नैजं समयं लिखितवान्। तस्मादर्वाचीन एवासौ श्रीहर्षकुलगणिः।

अमुष्य च विनिर्मितः केवलमेक एवायं ग्रन्थोऽस्माभिर्बालूचरनगरस्थभाण्डागारे निरायासेन समासादितः; अथ कश्चनान्योऽपि ग्रन्थ एतद्विरचितोऽस्ति नवेति वक्तुं न शक्यते।

परमार्थतोऽयं कविकल्पद्रुमः कवीनां कल्पद्रुम एव। यद्यपि वोपदेवकृतोऽप्येको ग्रन्थः कविकल्पद्रुमनामाऽस्ति, परञ्च नैतादृक् रुचिरतामाधत्त इति निरीक्षकेभ्यः समक्षमेव भविष्यति।

एतत्कविकल्पद्रुमस्यैकादशपल्लवाः सन्ति, तेष्वन्तिमपल्लवमात्रस्य स्वोपज्ञधातुचिन्तामणिनाम्नी टीकाऽपि समुपलब्धा। किन्तु समाप्तौ "तत्सम्पूर्त्तये संपूर्णेयं कविकल्पद्रुमटीका" इति लेखादनुमीयतेऽवश्यं भविष्यति समस्तग्रन्थस्येयं स्वोपज्ञटीका। परञ्च लेखकालस्यवशात् कारणान्तराद् वाऽसमस्तैव लिखिता स्यात्। प्रथमेऽनुबन्धफलप्रकाश-नामकपल्लवे तु यत्र श्लोकमध्ये हैमशब्दानुशासनसूत्रनिर्देशोऽस्ति तस्य शिरोभागे सूत्राङ्कस्य विन्यासोऽस्तीति शम्।

श्रीयशोविजयपाठशालाव्यवस्थापकाः।



श्रीहर्षकुलगणिविरचितः

# कविकल्पद्रुमः ।

महामहोपाध्यायश्रीदेविद्यासागरगणिगुरुभ्यो नमः ।

अर्हं प्रणम्य श्रीसिद्धहेमलक्षणसङ्गताः ।
साभिधेयाः प्रकाश्यन्ते पद्यबन्धेन धातवः ॥ १ ॥
आदौ वक्ष्येऽनुबन्धानां सर्वधातुनिवासिनाम् ।
फलानि, तेष्वकारः स्यात् सुखोच्चाराय जीववत् ॥२॥

४।४।७१

आकार आदित इतीट्निषेधाय क्तयोर्भवेत् ।
भिन्नवद्वेट्निषेधादिहेतुश्चारम्भभावयोः ॥ ३ ॥
प्रमेदितः प्रभिन्नश्च यथा भिन्नं च मेदितम् ।

४।४।७२

अनेनेति नवा भावारम्भ इत्यत्र कीर्त्तितः ॥ ४ ॥

३।३।२२
इकार इङ्गितः कर्त्तर्यात्मनेपदसूचकः ।
एधतेवदीकारस्तु व्यक्तोभयपदात्मकः ॥ ५ ॥
३।३।९५
ईंगितस्सूत्रनिर्दिष्टो यजते यजतीतिवत् ।
४।४।९८
उति स्वरान्नन्दतिवन्नोऽन्त इत्युदितः स्वरात् ॥ ६ ॥
४।४।४२
अङ्क्त्वाऽञ्जित्वावदूः क्त्वायामूदितो वेति वेट्फलः ।
४।२।३५
अचखाददुपान्त्यस्येत्युपान्त्यह्रस्वनाश ऋत् ॥ ७ ॥
३।४।६५
ऋकारोऽदर्शदद्राक्षीद् ऋदिच्छ्वीत्यङ्विकल्पकृत् ।
३।४।६४
ऌदिद्द्युतादीत्यङ्सूची ऌत्परस्मैपदेऽगमत् ॥ ८ ॥
४।३।४९
न श्व्यादि सिच्येदिद् वृद्धेरभावायाहसीदिव ।
४।४।६१
इडभावः क्तयोरैदित् डीयश्व्यैदीति चित्तवत् ॥ ९ ॥
४।२।७०
सूयत्येति क्तयोस्तो न ओदिति स्यात्प्रवाणवत् ।
४।४।३८
धूगौदीत्यशिति स्तादौ वेट् क्षान्ता क्षमितावदौत् ॥ १० ॥

४।४।५६
एकस्वरादिति स्ताद्यशिति स्यादिडभावकृत् ।
अनुस्वारः प्रवातावत्स्वरेत इति संस्थिताः ॥ ११ ॥

---

अदादिज्ञापकः कः शित्यत्र न प्रत्ययोऽस्तिवत् ।
३।४।७१
कर्त्तर्यनज्भ्य इत्युक्तेर्यङ्लुबन्ता अदादिवत् ॥ १२ ॥
स्याद्ञित्युभयतोभाषा करोति कुरुते यथा ।
३।३।९५ ३।३।२२
ईङ्गीति, ङिति गातेवदिङितेत्यात्मनेपदम् ॥ १३ ॥
३।४।७२
दिवाद्यावेदकश्चोऽत्र दिवादेः श्यः स्यतीतिवत् ।
५।२।९२
ज्ञानेच्छार्चेति ञीति क्तः सत्यर्थे भिन्नरूपवत् ॥१४॥
३।४।७५
स्वादिसूची टकारोऽत्र स्वादेः श्नुः स्याद्धिनोतिवत् ।
२।४।२०
ङ्यर्थः स्तनंधयीत्यादौ ट्धेमत्राणञेति टित् ॥ १५ ॥
५।३।८३
ट्वितोऽथुरित्यनेन स्यादथुर्नदथुवत् ट्विति ।
५।३।८४
ड्विति कृत्रिमवद् ज्ञेयो ड्वितस्त्रिमगिति त्रिमक् ॥ १६ ॥

३।४।१७
णः स्याच्चुरादये तत्र णिच् चुरादिभ्य ईरयन् ।
२।१।५१
स एव इण इत्यादाविण्कृधातौ विशेषकृत् ॥ १७ ॥
३।४।८१
तानुबन्धस्तुदाद्यर्थस्तुदादेः शस्तुदामिवत् ।
३।४।८२
रुधाद्यर्थं पिदत्र श्नो रुधां स्वराद् रुणद्धिवत् ॥ १८ ॥
बवयोरेकता कान्ता दाम् दान इति मिद् भवेत् ।
४।२।१०८
श्रौत्यादिष्वऽन्यदासंज्ञानिषेधायेव यच्छति ॥ १९ ॥
३।४।८३
तनादये य उस्तत्र कृग्तनादेस्तनोतिवत् ।
३।३।५
दासंज्ञाभावकृद्दः स्यादवौदेत्यवदातवत् ॥ २० ॥
३।४।७९
शित् क्र्यादिज्ञापकोऽत्र श्ना क्र्यादेः क्रीणातिवद्भवेत् ।
५।३।१०७
षानुबन्धोऽङ्प्रत्ययाय क्षमावत् स्यात्षितोऽङिति ॥२१॥
३।४।८
व्यञ्जनेत इति प्रोक्ताः कण्ड्वादेर्यगसूयते ।
भ्वादयः शब्विकरणा उत्सर्गेणार्च्छतीतिवत् ॥ २२ ॥

इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽयमपूरि पल्लवः प्रथमः ॥२३॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रातिष्ठ-श्रीहेमविमलसूरिविजयमानराज्ये मण्डि-तपण्डितकुलपं-कुलचरणगणिशिष्यह-र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि ग्रन्थेऽनुबन्धफलप्रकाशो नाम प्रथमः पल्लवः पल्लवयाम्बभूव॥



क्वचिदादौ धातुः स्यात् क्वचिदर्थो बन्धसङ्गतेरुक्तिः ।
चः पूर्वसमुच्चयनेऽथादिलन्तौ न पूर्वगतौ ॥ १ ॥
अनिट्-परस्मैप्रभृतिः सर्वेषु स्वानुबन्धतः ।
ज्ञेयो विभागो धात्वन्तवर्णोक्तिः पूर्वमेव हि ॥ २ ॥

भू धातुः सत्तायामादन्ताः ष्ठां गतौ निवृत्तायाम् ।
घ्रां गन्धोपादाने म्नां अभ्यासेऽथ दाम् दाने ॥ ३ ॥
शब्दाग्नियोगयोर्ध्मां पां पाने गाङ्गताविदन्ताः षट् ।
ष्मिङ् ईषद्धसने स्यादिं गमने श्रिग् तु सेवायाम् ॥ ४ ॥
जिं ज्रिं परिभूतौ क्षिं क्षय ईदन्तौ वयोगतौ डीङ् ।
णींग् प्रापणे ह्युदन्ता दुं द्रुं शुं स्रुं प्रुंङ् च्युंङ् ॥ ५ ॥
ज्युंङ् प्लुंङ् ज्रुंङ् गमने रुंङ् रोषे च ध्रुं स्थिरत्वगत्योः कुंङ् ।
उंङ् गुंङ् घुंङ् ङुंङ् शब्दे सुं प्रसवैश्वर्य्ययोर्हि ऊदन्तौ ॥६॥
पूङ् पवने मूङ् बन्धे ऽथ ऋदन्ताः धृंग् धारणे भृंग् ।
भरणे डुकृंग् करणे हृंग् हृतौ स्मृं तु चिन्तायाम् ॥ ७ ॥
गृं घृं तु सेचने सृं गमने ऋं प्रापणे च ह्वृं वरणे ।
ध्वृं ह्वृं कौटिल्यार्थावौस्वृ तु शब्दोपतापयुगे ॥ ८ ॥
धृंङ् तु अवध्वंसेऽथो ॠदन्तः प्लवनतरणयोस्तॄः स्यात् ।
एदन्ता मेंङ् प्रत्यर्पणे ऽथ देंङ् पालने ट्धें पाने ॥ ९ ॥
ऐदन्ता द्रैं स्वप्ने ध्रैं तृप्तौ निस्वने तु कैं गैं रैं ।
श्रैं स्नैं पाके ओवैं पैं शोषे ख्यैं तु खदने स्यात् ॥ १० ॥

गात्रविनामे म्लैं ध्यैं न्यङ्कृतौ संक्षये तु जैं सैं क्षैं ।
ग्लैं हर्षक्षयणे ध्यैं चिन्तायां शोधने दैंव् ॥ ११ ॥
श्यैङ् गमने प्यैङ् वृद्धौ ष्ट्यैं स्त्यैं सङ्घातशब्दयोः ष्णैं तु ।
वेष्टनके त्रैङ् पालन इह कान्ताः फक्क नीचगतौ ॥ १२ ॥
तक हसने शुक गमने ककि लौल्ये बुक्क भाषणे हिक्की ।
अव्यक्तवाचि तकु कृच्छ्रजीवने सेचने शीकृङ् ॥ १३ ॥
द्रेकृङ् ध्रेकृङ् शब्दोत्साहेऽकुङ् लक्षणे शकुङ् रेकृङ् ।
शङ्कार्थौ कुकि वृकि तु ग्रहणार्थौ दर्शने लोकृङ् ॥ १४ ॥

ककुङ् श्वकुङ् त्रकुङ्
श्रकुङ् श्लकुङ् ष्वष्कि वस्कि मस्कि तिकि ।
ढौकृङ् त्रौकृङ् टीकृङ्
सेकृङ् सेकृङ् टिकि गतौ स्युः ॥१५॥

श्लोकृङ् सङ्घातार्थे कौटिल्ये वकुङ् मकुङ् भूषायाम् ।
चाकि तृप्तिप्रतिघातार्थयोर्द्वियुग्विंशतिः खान्ताः ॥१६॥
शाखृ श्लाखृ व्याप्तौ कक्ख हसे राखृ लाखृ ओखृयुतः ।
द्राखृ ध्राखृ विशोषालमर्थयोरुख णख नखश्रित् ॥१७॥

वख मख रख लख मखु रखु
लखु रिखु इख ईखु इखु गतौ गान्ताः ।
वल्ग रगु लगु तगु श्रगु
अगु श्लगु स्वगु वगु मगुश्रित् ॥ १८ ॥
उगु इगु रिगु लिगु गमने त्वगु कम्पे चाथ युगु जुगु वुगुः स्युः।
वर्जन इहाथ घान्ता गग्घ हासे पालने तु दघु ॥ १९ ॥
अघुङ् वघुङ् वेगार्थौ कैतवे च मघुङ् मतः ।
राघृङ् लाघृङ् तु सामर्थ्ये द्राघृङ् कदर्थने च वै ॥२०॥
रघुङ् लघुङ् गतौ श्लाघृङ् कत्थने लघु शोषणे ।
आघ्राणे शिघु चान्तास्तु डुयाचृग्याचनार्थकः ॥ २१ ॥
कुच शब्दे तारे स्यादपनयने लुञ्च अर्च पूजायाम् ।
अञ्चू गतौ च वञ्चू चञ्चू तञ्चू म्रुचू त्वञ्चू ॥ २२ ॥
मञ्चू मुञ्चू म्रुञ्चू म्लुचू ग्लुचू गतौ हि षश्चामि ।
शुच शोके क्रुञ्च गतौ कुञ्च च कौटिल्यतानवयोः॥२३॥
अञ्चुग् गमननिनादाव्यक्तयोः षचि सेचने काचि तु बन्धे।
दीप्तौ च कचुङ् वर्चि तु दीप्तौ श्वचुङ् श्वचि गमार्थौ॥२४॥

पचुङ् व्यक्तीकरणे ष्टुचि प्रसादेऽथ दर्शने लोचृङ् ।
मचि मुचुङ् कल्कने मचुङ् धारणोच्छ्रायपूजनेषु च वै ॥२५॥
स्तेये ग्लुचू ग्रुचू डुपचींष् पाके व्यक्तवाचि तु शचि स्यात् ।
छान्ता ह्रीछ व्रीडे हुर्च्छा कौटिल्य आछु आयामे ॥२६॥
स्फुर्च्छा स्मुर्च्छा विस्मृत्यर्थौ लछ लाछु लक्षणे म्लेछ ।
अव्यक्तवाचि मुर्छा मोहसमुछ्राययोः प्रमादे तु ॥ २७॥
युछ वाछु त्विच्छायां जान्तास्तिजि तु क्षमानिशानयुगे ।
एजृङ् भ्राजि भ्रेजृङ् राजृग् टुभ्राजी दीप्तौ स्युः ॥ २८॥
रञ्जीं रागेऽथ भर्जी सेवायां स्यादिजुङ् धृजु ध्वजुयुग् ।
ध्वज धृज वज ध्रज ध्रजु षस्ज व्रज युग्गतावज तु ॥२९॥
क्षेपे च टुवोस्फूर्जा वज्रनिनादे कुजू खुजू स्तेये ।
खजु गातिवैकल्यार्थे खर्जे स्याद्व्यथनमार्जनयोः ॥ ३० ॥
जज जजु युद्धे लज लजु तर्ज स्याद्भर्त्सनेऽथ लाजयुतः ।
लाजुरपि भर्जने चैजृ कम्पने तुज तु हिंसायाम् ॥ ३१ ॥
तुजु बलने चाव्यक्ते शब्दे गुज कूज गुजुयुतः क्षीज ।
गर्ज गृजु गजु गृजश्रित् मुज मुजु मृज मज निनादार्थाः॥३२॥

गज मदने च व्यथने तु कर्ज मन्थे खज त्यजं हानौ ।
ईजि तु गतिकुत्सनयोरृजुङ् भृजैङ् भर्जने ऋजि तु ॥३३॥
अर्जनगमनस्थानार्जनेषु सर्जार्ज अर्जने स्याताम् ।
षञ्जं सङ्गे टान्ताः स्फुट्ट् स्फुट विशरणे स्याताम् ॥ ३४ ॥
स्फुटि विकसने ऽट्टि हिंसातिक्रमयोर्गोष्टि लोष्टि सङ्घाते ।
घट्टि तु चलने चेष्टि तु चेष्टायां रुट्ठ लुट्ठ स्तेये ॥ ३५ ॥
जट झट सङ्घाते पिट शब्दे चावरणवर्षयोस्तु कटे ।
शट विशरणगमनरुजावसादनेषु ध्वनौ तु विट ॥३६॥
वट वेष्टि वेष्टने किट खिट उत्त्रासे प्रमर्दने तु मुट ।
तट उच्छ्राये हेट तु बाधायां भट भृतौ चिट प्रैष्ये ॥३७॥
अट पट इट किट कट कट्ठ कटै गतौ णट नृत्तौ खट तु काङ्क्षे।
षट अवयवे लुट स्याद्विलोटने कुट्ठ तु वैकल्ये ॥ ३८ ॥
चुट चुट्ठ अल्पीभावे हट दीप्तौ वट्ठ विभाजने लट तु ।
परिभाषणशैशवयोरथ रट परिभाषणे रेटृग ॥ ३९ ॥
प्रणये च शिट षिट ह्वावनादृतौ ठान्तका अठुङ् गमने ।
कठुङ् मठुङ् शोकार्थौ बाधायां हेठि एठि द्वौ ॥ ४० ॥

परिभाषणे रठ स्याद्व्यक्तायां वाचि पठ वठ स्थौल्ये ।
मठ मदनिवासयोश्च प्रोक्तः कठ कृच्छ्रजीवनके ॥ ४१ ॥
उठ रुठ लुठ उपघाते अठ रुठु गमनेऽथ हठ बलात्कारे ।
पिठ हिंसासंक्लेशार्थयोः शठ व्याजकरणे च ॥ ४२ ॥
शुठ गमनप्रातिघाते कुठु लुठु आलस्यके च शुठु शोषे ।
मुठुङ् तु पलायने स्याद् वठुङ् भवेदेकचर्यायाम् ॥४३॥
डान्तास्तुडुङ् प्रमये चडुङ् तु कोपेऽथ शौडृ गर्वार्थः ।
खुडुङ् गतेर्वैकल्ये कडुङ् मदे खडुङ् मन्थार्थः ॥ ४४ ॥
तुडृ तूडृ तोडनार्थे क्रीडृ विहारेऽथ मडु विभूषायाम् ।
अड उद्यमे पुडु स्यात्प्रमर्द्दने खण्डने च मुडु ॥ ४५ ॥
गडु तु वदनैकदेशे मेडृयुतम्रेडृ लोडृ तथा ।
म्लेडृ भवेदुन्मादे हुडृ हूडृ हूडृ हौडृ गतौ ॥ ४६ ॥
रोडृयुतरौडृ तौडृ त्वनादरे कडु मदे लड विलासे ।
यौडृ तु सम्बन्धे विड आक्रोशे कड्ड कार्कश्ये ॥ ४७ ॥
हुडुङ् पिडुङ् सङ्घाते शडुङ् रुजायां च पडुङ् गमनार्थः ।
शाडृङ् श्लाघायां स्यात् द्राडृङ् ध्राडृङ् विशरणार्थौ ॥४८॥

वाड्ड् आप्लाव्यार्थे तड्डुङ् भवेत्ताडने मुड्डुङ् वरणे ।
मुड्डुङ् इति मार्जनार्थे हेड्ड्ङ् होड्ड्ङ् अनादरणे ॥ ४९ ॥
हिड्डुङ् गमने च अड्ड स्यादभियोगेऽथ चुड्ड हावकृतौ ।
भड्डुङ् परिभाषणार्थौ मड्डुङ् वड्डुङ् वेष्टने कुड्डुङ् दाहे ॥५०॥
खोड्ड् प्रतिघाते ऽथो णान्ता स्याद्वर्णगमनयोः शोणृ ।
घुणि घूर्णि भ्रमणार्थौ पाणि तु व्यवहारस्तुत्योः स्यात् ॥५१॥
अण रण वण बण भण मण धण व्रण भ्रण कण क्वण ध्वणयुग् ।
ध्रण चण शब्दे पैणृ श्लेषगतिप्रेरणेष्वथो ओणृ ॥ ५२ ॥
अपनयने घिणुङ् घुणुङ् घृणुङ् ग्रहणेऽथ वेणृग् ज्ञाने ।
चिन्तायां वादित्रादाने गमने निशामनेऽपि स्यात् ॥५३॥
श्रोणृ श्लोणृ स्यातां सङ्घाते तान्तकाः कित निवासे ।
जुतृङ् श्रुतृङ् दीप्त्यर्थौ यतैङ् प्रयत्ने चतेग् तु याच्ञायाम् ॥५४॥
संज्ञाने तु चितै स्यात् च्युतृ आसेचनेऽत सततगतौ ।
चुतृ श्चुतृ श्च्युतृ क्षरणे जुतृ तु भासने ख्यातः ॥ ५५ ॥
अतु बन्धने ऋत घृणागमनस्पर्द्धेषु पञ्चदश थान्ताः ।
कुथु मन्थ मान्थ पुथु लुथु मथु हिंसाबाधयोर्ज्ञेयाः ॥ ५६ ॥

नाथृङ् उपतापाशीर्याच्ञैश्वर्येषु कत्थि तु श्लाघे ।
प्रोथृग् पर्याप्तौ स्यात् वेथृङ्युतविथृङ् याच्ञायाम् ॥५७॥
कौटिल्ये ग्रथुङ् स्यात् शैथिल्ये श्रथुङ् मिथृग् मतिवधयोः ।
मेथृग् सङ्गे चाथो दान्ता ज्ञेयास्त्रिपञ्चाशत् ॥ ५८ ॥

णिदु कुत्सायामथ रद विलेखने नर्द णर्द गर्द रवे ।
अव्यक्तभाषणे णदसंयुक्ता ञिक्ष्विदा धातुः ॥ ५९ ॥
कर्द तु कुत्सितशब्दे हिंसायां तर्द खर्द दशने स्यात् ।
चदु दीप्त्याह्लादनयोः क्लिदु इति परिदेवने ख्यातः ॥६०॥
क्रदुयुक्क्लदु आमन्त्रणरोदनयोर्विदुः स्मृतोऽवयवे ।
स्कन्दृं गतिशोषणयोष्टुनदु समृद्धौ बद स्थैर्ये ॥ ६१ ॥
खद हिंसायां च गद व्यक्तायां वाचि भक्षणे खादृ ।
अर्द तु गतियाचनयोस्त्रदु चेष्टायामदु तु बन्धे ॥ ६२ ॥
इदु परमैश्वर्ये स्यादाप्रवणे स्कुदुङ् षूदि तु क्षरणे ।
प्रोक्ता वदुङ् स्तुत्यभिवादनयोर्भदुङ् सुखशुभयोः ॥६३॥
स्पदुङ् तु किञ्चिच्चलने क्लिदुङ् तु परिदेवने श्विदुङ् श्वैत्ये ।
मदुङ् स्तुतौ प्रमोदे स्वप्ने गमने मदार्थेऽपि ॥ ६४ ॥

ह्रादि तु शब्दे ह्लादैङ् सुखे च गुदि गुर्दि कुर्दि केल्यर्थाः।
पर्दि तु कुत्सितशब्दे ददि दाने मुदि तु हर्षे स्यात् ॥६५॥
स्वदि ष्वदियुग् स्वादि तु आस्वादन उर्दि खेलनार्थे स्यात्।
मानेऽपि हदिं तु पुरीषोत्सर्गे याचने तु चदेग् ॥ ६६ ॥
णेदृग् णिदृग् द्वितयं स्यात्कुत्सासन्निकर्षयोः प्रोक्तम्।
ओबुन्दृग् आलोचे मेधावधयोर्मिदृग् मेदृग् ॥६७ ॥
धान्ताः षिधू गमार्थे षिधौ तु माङ्गल्यशास्त्रयोरुक्तः।
एधि तु वृद्धौ स्पर्द्धि तु सङ्घर्षे बन्धने तु बाधि ॥ ६८ ॥
गाधृङ् भवेत्प्रतिष्ठालिप्साग्रन्थेषु धारणे तु दधि।
मेधृग् सङ्गमहिंसामतिषून्दार्थौ शृधूग मृधूग् ॥ ६९ ॥
नाधृङ् नाथृङ्वत् स्याद् बुधूग् बोधे रोटने बाधृङ्।
शुन्ध तु शुद्धौ नान्ताः पनि स्तुतौ मानि पूजायाम् ॥७०॥
वन षन भक्तौ स्वन वन धन ध्वन स्तन चन स्वनार्थाः स्युः।
शानी तु तेजने स्याद्दानी अवखण्डने ऽथ खनूग् ॥ ७१ ॥
अवदारणे कनै तु प्रकाशशोभागतिष्वथो पान्ताः।
रप लप जल्प व्यक्ते वचने जप मानसे च स्यात् ॥७२॥

धूप तपं सन्तापे त्रुप तुम्प त्रुम्प तुप तु हिंसायाम् ।
सृप्लृं गतौ चुप स्यान्मन्दायां रक्षणे तु गुपौं ॥ ७३ ॥
तिपृङ् ष्टिपृङ् ष्टेपृङ् क्षरणे तेपृङ् तु कम्पने चोक्तः ।
गुपि गोपनकुत्सनयोर्ग्लेपृङ् दैन्ये च चलने च ॥ ७४ ॥
केपृङ् कपुङ् टुवेपृङ् गेपृङ् चलने त्रपौषि लज्जायाम् ।
मेपृङ् रेपृङ् लेपृङ् गमने चप सान्त्वनेऽथ शपीं ॥ ७५ ॥
आक्रोशेऽथ षप स्यात् समवाये फान्तकास्तुफ त्रुम्फ ।
त्रुफ तुम्फ हिंसने रफ रफु वर्फ गतावथो बान्ताः ॥७६॥
अर्ब रबु कर्ब खर्ब तु गर्बयुतश्चर्ब तर्ब नर्ब रिबु ।
पर्बयुतबर्ब शर्ब तु षर्ब तथा सर्ब गमनार्थाः ॥ ७७ ॥
लुबु तुबु तु अर्दने चुबु मुखसंयोगेऽथ कुबु समाच्छादे ।
अबुङ् रबुङ् शब्दार्थौ लबुङ् अवस्रंसने च स्यात् ॥७८॥
क्लीबृङ् धाष्टर्याभावे क्षीबृङ् तु मदे कबृङ् तु वर्णे स्यात् ।
भान्ताः सृंभू षिंभू सृभू स्रिभू भर्भ हिंसायाम् ॥ ७९ ॥
शीभृङ् चीभृङ् शल्भि श्लाघायां वल्भि भोजनार्थेऽथ ।
डुलभिंष् प्राप्त्यर्थे ष्टभुङ् स्कभुङ् ष्टुभूङ् स्तम्भे ॥ ८० ॥

रेभृङ् अभुङ् रभुङ्युग्
लभुङ् निनादे रभिं तु राभस्ये ।
जभुङ् जभैङ् जृभुङ् स्यु-
र्गात्रविनामेऽथ गल्भि धार्ष्ट्ये स्यात् ॥ ८१ ॥

सुरते यभं जभ द्वौ शुम्भ तु वधकथनयोरथो मान्ताः ।
अम हम्म द्रम गम्लृं मीमृ गतावुपरमे तु यमूं ॥ ८२ ॥
ष्टम षम वैक्लव्यार्थौ स्यमू निनादे तथाऽम भजने च ।
प्रह्वत्वे तु णमं स्यात् पादन्यासे क्रमू धातुः ॥ ८३ ॥
प्रोक्ताश्चमू छमूयुग् जमू झमूश्रिज्जिमू च निघसार्थाः ।
भामि क्रोधे कान्तौ कमूङ् सहने क्षमौष्यथो यान्ताः ॥८४॥
ओप्यायैङ् स्फायैङ्युग् वृद्धावूयैङ् तन्तुसन्ताने ।
क्नूयैङ् शब्दोन्दनयोस्तायृङ् सन्तानपालनयोः ॥ ८५ ॥
तयि णयि रक्षणगत्योर्दयि हिंसादहनयोश्च दानेऽपि ।
अयि वयि पयि मयि नयि चयि रयि गमनार्थाः अथो पूयैङ् ८६
दुर्गन्धकाविशरणयोः सूर्क्ष्ययुतावीर्क्ष्य ईर्ष्य ईर्ष्यार्थौ ।
हय हर्य गतिक्लान्त्योः शुच्यै चुच्यै अभिषवार्थौ ॥ ८७ ॥

मव्य तु बन्धे क्ष्मायैङ् विधूननेऽथो निशामनार्चनयोः ।
चायृग् व्ययी तु गमने रान्ताः त्सर कैतवगतौ स्यात् ॥८८॥
क्मर कौटिल्ये धोर्क्ङ् तु गतिचातुर्येऽभ्र मभ्र वभ्र गतौ ।
चर भक्षणे च धातुः खोर्क्ङ् तु गमनप्रतीघाते ॥ ८९ ॥
लान्ताः पञ्चाशत् स्युर्दल त्रिफला विशरणे गल न्यादे ।
शूल रुजायां कूल तु वरणे मूल प्रतिष्ठायाम् ॥ ९० ॥
मील श्मील स्मील क्ष्मील निमेषेऽथ णील वर्णार्थः ।
शील समाधौ कील तु बन्धे पील प्रतिष्टम्भे ॥ ९१ ॥
फल निष्पत्तौ तूल तु निष्कर्षे फुल्ल विकसनार्थः स्यात् ।
श्वल्ल श्वल शीघ्रगतौ चुल्ल स्याद् हावकरणार्थः ॥ ९२ ॥
चिल्ल तु शैथिल्ये च स्खल खेळ केळ केळ वेळ तथा ।
चेळ चलने च खल सञ्चये च इह पूल सङ्घाते ॥ ९३ ॥
पेळ तिल फेळ शेळश्रित् च सेळ वेह्ळ सल तिल्ल स्युः ।
पल्ल वेल्ल गमने ऽली भूषणपूर्णतानिषेधेषु ॥ ९४ ॥
वलि वल्लि तु संवरणे शलि चलने चाथ कल्लि मौनार्थे ।
मलि मल्लि धारणार्थौ कलि सङ्ख्याशब्दयोरुक्तः ॥ ९५ ॥

भलि भल्लि तु परिभाषणहिंसादानेष्वथो वकारान्ताः ।
पर्वयुतपूर्व मर्व प्रपूरणे चर्व अदनार्थे ॥ ९६ ॥
कर्वयुतखर्व गर्व तु दर्पार्था मर्व धवु शव पविश्रित् ।
रेवृङ् गमने धावृग् शुद्धौ चाथोद्यमे गुर्वै ॥ ९७ ॥
उर्वै तुर्वै थुर्वै दुर्वै धुर्वै तथाऽर्व जुर्वैयुग् ।
शर्वयुतभर्व कदने मुर्वै मव बन्धने ख्यातौ ॥ ९८ ॥
अव रक्षणे प्रवेशे तृप्तौ कान्तौ गतौ क्रियादीप्त्योः ।
अवगमने च प्रीतौ स्वाम्यर्थे याचने श्रवणे ॥ ९९ ॥
हिंसायामिच्छायां वृद्धावालिङ्गने तथाऽवाप्तौ ।
दहने भावे प्रोक्तः ष्ठिवू क्षिवू निरसने स्याताम् ॥१००॥
जीव असुधारणे स्यात् पिवु मिवु निवु सेचनेऽथ पीवाश्रित् ।
मीवयुततीव णीव च नीव स्थौल्ये हिवु दिवुश्रित् ॥१०१॥
जिवु संप्रीणन इवु तु व्याप्तौ चादानसंवरणयोस्तु ।
चीवृङ् तेवृङ् देवृङ् द्वौ स्यातां देवनार्थेऽत्र ॥ १०२ ॥
षेवृङ् सेवृङ् केवृङ् खेवृङ् गेवृङ् तथा च पेवृङ्युग् ।
ग्लेवृङ् प्लेवृङ् म्लेवृङ् स्युः सेवनेऽथ दश शान्ताः ॥१०३॥

कश शब्देऽथो मिश मश रोषार्थे चाथ णिश समाधौ स्यात् ।
दाश्रृग दानेऽथ शश प्लुतिगमने प्रेक्षणे दृशृं ॥१०४॥
दंशं दशने काशृङ् प्रभासने क्लेशि बाधने षान्ताः ।
भाषि च वचसि व्यक्ते कान्तीकरणे घुषुङ् प्रोक्तः ॥१०५॥
गेषृङ् अन्विच्छायामीषि तु दर्शने गतौ वधार्थेऽपि ।
हेषृङ् रेषृङ् वाच्यव्यक्तायां पर्षि तु स्नेहे ॥१०६॥
जेषृङ् णेषृङ् एषृङ् हेषृङ् गमने भये तु भेषृग् स्यात् ।
कष शिष जष झष वष मष मुष रुष रिष यूष जूष शष चष तु ।
हिंसार्था भूष अलङ्कारेऽथ हृषू अलीकार्थः ॥१०७॥
जिषू विषू मिषू निषू वृषू पृषु तु सेचने ।
मृषू तु सहने चोषू श्रिषू श्लिषू प्रुषू प्लुषू ॥१०८॥
दाहे घृषू तु संघर्षे वृषू सङ्घातहिंसयोः ।
ईष उञ्छे लूष मूष स्तेये कृषं विलेखने ॥१०९॥
अदने चषी पषी तु स्यात् स्पर्शनबाधयोश्छषी हनने ।
दीप्तौ त्विषीं तथाऽषी स्याद्गत्यादानयोश्च हि झषी तु ॥११०॥
चीवृग्वत् पूष भवेद् वृद्धौ सान्ता असी अषी तुल्ये ।

ह्रस रस तुस ह्लसश्रित रासृङ् णासृङ् निनादार्थाः ॥
भवति शसू हिंसायां शंसू स्तवने च तसु अलङ्कारे ।
घस्लृं अदनेऽथ हसे हसने स्रंसूङ् प्रमादार्थः ॥११२॥
पिसृ पेसृ वेसृ गमने णासि कौटिल्ये ग्रसूङ् ग्लसूङ् अदने ।
कासृङ् खकुत्सायामाङ्पूर्वः शसुङ इच्छायाम् ॥११३॥
भासि टुभ्रासि टुभ्लासृङ् दीप्तौ भ्यसि तु साध्वसे ।
स्यात् घसुङ् करणे श्लेषक्रीडयोस्तु लस स्मृतः ॥११४॥
दासृग् दानेऽथ हान्ताः स्युर्दहं भस्मीकृतौ स्मृतः ।
वर्हि वल्हि प्रधानत्वे गर्हि गल्हि तु कुत्सने ॥ ११५ ॥
ग्लाहौङ ग्रहणे द्राहङ् निक्षेपणार्थेऽथ वेहङ् ।
जेहङ् वाहङ् प्रयत्नार्था रहु ह्लिहि अहुङ् गतौ ॥११६॥
माहग् मानेऽथ गुहौग् संवरणे सेचने मिहं धातुः ।
ऊहि वितर्के गाहौङ् विलोडने ईहि चेष्टायाम् ॥११७॥
महुङ् बहुङ् दह दहु बृह वृद्धौ बृहू बृहु स्वनार्थौ च ।
उहृ दुहृ तुहृ अर्दनार्था रह त्यागे ॥ ११८ ॥
अर्ह मह पूजनार्थौ चह शाठ्ये बर्हि बल्हि युग्मं तु ।

परिभाषणे हिंसाच्छादनेष्वथो क्षान्तका एते ॥ ११९ ॥
त्वक्ष त्वचने सूर्क्ष्य लनादरे मक्ष सङ्घाते।
अक्षौ व्याप्तौ च भवेत्तक्षौ त्वक्षौ तनूकरणे ॥१२०॥
उक्ष तु सेके वक्ष तु रोषेऽथो चुम्बने भवेद् णिक्ष।
स्तृक्षयुततृक्ष तु गमनार्थे पालने रक्ष ॥१२१॥
काक्षुयुतवाक्षु माक्षु तु काङ्क्षायां घोरवासितार्थे च।
द्राक्षु ध्राक्षु ध्वाक्षु त्रयं भवेद् वृक्षि वरणार्थः ॥१२२॥
धिक्षि धुक्षि क्लेशने संदीपने जीवनेऽपि च।
दीक्षि मौण्ड्ये व्रतादेशेज्यासूपनयने यमे ॥ १२३ ॥
शिक्षि तु विद्याग्रहणे याञ्चायां भिक्षि दर्शने लीक्षि।
श्लक्षी अदने दक्षि तु शैघ्र्ये वृद्धावितीह शतनवकम्।१२४।
षट्त्रिंशदधिकमुक्तं धातूनामिदमथ द्युतादिगणः।
द्युति दीप्तौ चान्तो रुचि अभिलाषे च त्रयष्टान्ताः ॥१२५॥
घुटि तु परिवर्त्तने रुटि लुटि च प्रतिघात इह दान्ताः।
ञिमिदाङ् स्नेहार्थे क्ष्विदाङ् ष्विदाङ् मोचने च ञीतौ द्वौ॥
मान्ताः क्षुभि सञ्चलने शुभि दीप्तौ णभि तुभि द्वयं प्रमये।

स्रंभूङ् विश्वसनार्थे प्रोक्तस्तान्तौ श्विताङ् वर्णे ॥१२७॥
वृतूङ वर्त्तने दान्तः स्यन्दौङ स्रवणार्थकः ।
धान्तौ वृधूङ वृद्धौ स्यात् शृधूङ पायुजे रवे ॥१२८॥
पान्तः कृपौङ सामर्थ्ये वृतादिरथ ठान्तकाः ।
लुठिवल्लुठि शान्तस्तु भ्रंशूङ् स्रंसेऽथ सान्तकौ ॥१२९॥
स्रंसूङ् भ्रंसूङ्समो ध्वंसूङ् गतौ चेति त्रिविंशतिः ।
वृत् द्युतादिर्ज्वलादौ तु ज्वल दीप्तौ हि तान्तकः ॥१३०॥
पतॢ स्याद्गमने थान्ता निष्पाकार्थे क्वथे मतः ।
मथे विलोडनार्थेऽथ पथे पतॢसमार्थकः ॥ १३१ ॥
चान्तः कुच तु कौटिल्ये प्रतिष्टम्भे विलेखने ।
संपर्च्चनेऽपि दान्तौ द्वौ शदॢं तु शातनार्थकः ॥१३२॥
षदॢं विशरणे गत्यवसादनार्थयोरपि ।
मान्ता भ्रमू तु चलने ट्वमूद्गिरणे मतः ॥ १३३ ॥
क्रीडायां तु रमिं स्याद्धान्तो बुध अवगमेऽथ लान्ताः स्युः ।
टुल टल वैक्लव्यार्थौ चल कम्पे ष्ठल स्थाने ॥ १३४ ॥
बल तु प्राणनधान्यावरोधयोर्हल विलेखनार्थः स्यात्

पल फल शल गत्यर्थो हुल हिंसासंवरणयोश्च ॥१३५॥
णल गन्धे जल घात्ये कुल संस्त्यानबन्धयोः ।
पुल तु विपुलत्वे शान्तः स्यात् कुशं तु आह्वानरोदनयोः १३६
रान्तः क्षर सञ्चलने हान्तौ षर्हि मर्षणे रुहं जनुषि ।
सान्तः कस गमने वृत् ज्वलादिरेकाधिकं त्रिंशत् ॥१३७॥
अथो यजादिर्देवार्चादानयोः सङ्गतौ यजों ।
इदन्तः ट्वोश्वि गमने वृद्धावेदन्तकास्त्रयः ॥ १३८ ॥
ह्वेंग् स्पर्द्धारवयोः व्येंग् संवरणे वेंग् तन्तुसन्ताने ।
दान्तो वचसि व्यक्ते वद पान्तो बीजसन्ताने ॥१३९॥
टुवपों सान्तस्तु वसं निवास इह हान्तको वहीं धातुः ।
स्यात् प्रापणे नवेत्यथ घटादिरिह घटिष चेष्टायाम् ॥१४०॥
आदन्तः श्रां पाके ऋदन्तकः स्मृं गतस्तथाऽऽध्याने ।
ॠदन्तौ दॄ तु भये नॄ तु नयेऽथो चतुष्कान्ताः ॥१४१॥
अक कुटिलगतौ ष्टकयुक् स्तक प्रतीघात इह हि तृप्तौ च ।
चक खान्तस्तु कखे स्याद् हसने टान्ता णट तु नटने ।१४२।
परिभाषणे तु वट भट युग्मं जान्तः क्षजुङ् गतौ दाने ।

डान्ता गड सेचनके लड जिह्वोन्मन्थनार्थः स्यात् ॥१४३॥
हेड इति वेष्टनार्थे णान्ताः कण फणयुतौ रण गतौ स्यात् ।
चण हिंसादाने च शण श्रण दानार्थकौ गान्तः ॥१४४॥
लगे सङ्गे ह्रगे ह्लगे षगे सगे ष्टगे स्थगे ।
आच्छादनेऽग अकवत् शङ्कायां तु रगे स्मृतः ॥१४५॥
अथ थान्तास्तु षट् प्रोक्ताः स्नथ क्नथयुत क्लथ ।
क्रथ हिंसार्थको धातुः प्रख्याने प्रथिष स्मृतः ॥१४६॥
व्यथिष भयचलनयोः स्यादथ दान्ताः क्रदुङ कदुङ युक्
क्लदुङ् ।
वैक्लव्यार्थाः स्खदिष स्खदने परिमर्दने म्रदिष ॥१४७॥
ऊर्जने छद विख्यातो हर्षग्लपनयोर्मदै [षट्पदी] ।
नान्ताः ष्टनयुक् स्तन च ध्वन शब्दे स्वन अवतंस इह चन तु ।
हिंसायां पान्तः क्रपि करुणायां रान्तकौ ज्वर तु रोगे ॥१४८॥
ञित्वरिष सम्भ्रमार्थे, लान्ताश्चल कम्पने ह्वल ह्मल तु ।
चलनार्थौ ज्वल दीप्तौ च, सान्तकः प्रसिष विस्तारे ॥१४९॥
क्षान्तस्तु दक्षि हिंसागत्योः षष्टिर्घटादिरेकाढ्यः ।

सर्वे भ्वादिगणे स्युः सहस्रमेकं तथाऽष्टपञ्चाशत् ॥१५०॥
इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवो द्वितीयोऽयम् ॥१५१॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-
प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठ-
श्रीहेमविमलसूरिविजयमानराज्ये मण्डि-
तपण्डितकुलपं-कुलचरणगणिशिष्यह-
र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन-
वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि
ग्रन्थे भ्वादिगणप्रकाशो नाम
द्वितीयः पल्लवः ।

---

आदावदंक अदनेऽथादन्ताः प्सांक पूर्ववद्दांक ।
गतिगन्धनयोर्दांवक लवने ख्यांक प्रकथनार्थः ॥ १ ॥
लांक आदाने ष्णांक तु शौचेऽथ द्रांक कुत्सितगतौ स्यात् ।

श्रांक पाके रांक दाने भांक् दीप्तौ प्रांक पूरणे मांक् तु ॥२॥
माने पांक तु रक्षण इह यांक प्रापणे ह्यथेदन्ताः ।
इंक स्मरणे इंण्क गमने इंङक् तु अध्ययने ॥ ३ ॥
ईदन्तौ वींक् खादनकान्तिप्रजनासनेषु गमने च ।
शीङक् स्वप्न उदन्ताः षुंक् प्रसवैश्वर्ययोः स्नुक् तु ॥ ४ ॥
प्रस्रवने णुक ष्टुंगक् स्तवने तुंक् वृत्तिपूरणवधेषु ।
टुक्षु रु कुंक निनादे क्ष्णुक तेजन एषु मिश्रणे युक् स्यात् ॥५॥
आच्छादन ऊर्णुगक द्युंक् अभिगमे ह्नुङक् तु अपनयने ।
ऊदन्तौ षूङौक् प्राणिगर्भमोक्षे गिरि ब्रूंगक् ॥ ६ ॥
व्यक्तायामथ चान्तौ वचंक वचने पृचैकि संपर्के ।
जान्ताः पिजुङ् पृजुङ् द्वौ प्राग्वत् शुद्धौ मृजौक् णिजुकिं ।७॥
वृजैकिं वर्जने शब्दाव्यक्तत्वे शिजुकि स्मृतः ।
डान्त ईडिक् स्तुतौ तान्तः सस्तुक् स्वप्नेऽथ दान्तकः ॥८॥
विदक ज्ञाने नान्तो हनंक गतिहिंसयोरथो रान्तः ।
ईरिक गतिकम्पनयोः शान्तावीशिक् तु ऐश्वर्ये ॥ ९ ॥
वशक तु कान्तौ षान्तौ द्विषींक अप्रीतिनिर्मितौ सान्ताः ।

षसक स्वप्नेऽसूक् भुवि आङः शासूकि इच्छायाम् ॥१०॥
कसुकि तु गतिसातनयोराच्छादे वसिक चुम्बने णिसुकि ।
उपवेशनार्थ आसिक् हान्ता आस्वादने तु लिहींक् ॥११॥
लेपे दिहींक धातुः क्षरणे तु दुहींक् उच्यते क्षान्तः ।
चक्षिक् व्यक्ते वचने द्वाषष्टिरमी, अथ ह्वादिः ॥१२॥
हुंक् दानादनयोः स्यादीदन्तौ द्वौ ञिभींक् भये ह्रींक् तु ।
लज्जायामादन्तास्त्यागे ओहांक् अथौहांङक् ॥ १३ ॥
गमने मांङ्क् तु रवे मानेऽपि डुदांगक प्रदाने डुधांगक् ।
स्याद्धारणे च रन्तात्रितयमिदं पोषणे च टुडुभृंगक् वै ॥१४॥
पृंक पालनपूरणयोः ऋंक् गतौ जान्तकौ तु णिजृंकी ।
स्यात्पोषशौचयोरथ विजृंकी इह पृथग्भवेत्षान्तः ॥१५॥
विष्लृंकी व्याप्ताविति चतुर्दश ह्वादिरथ रुदादिरयम् ।
दान्तो रुदृक् अश्रुप्रमोचने पान्त ञिष्वपंक इति ॥१६॥
शयनेऽथ नान्तसान्तावन श्वसक् प्राणने भवेत्क्षान्तः ।
जक्षक भक्ष्यहसनयोः सान्तौ दीप्तौ चकासृक् स्यात् ॥१७॥
शासृक् अनुशिष्टौ स्यादादन्तो दुर्गतौ दरिद्राक् वै ।

रन्तो जागृक् निद्रापगमने रुज्जक्षपञ्चकं पूर्णम् ॥ १८ ॥

एवं स्युरदादिगणे सर्वे पञ्चाधिकाशीतिः। [षट्पदी]

इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवस्तृतीयोऽयम् ॥१९॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरि-
पट्टप्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्र-
तिष्ठश्रीहेमविमलसूरिविजयमानराज्ये
मण्डितपण्डितकुलपं-कुलचरणग-
णिशिष्यहर्षकुलप्रणीते सार्थकहैम-
धातुप्रकटेऽनवद्यपद्यबन्धे कविक-
ल्पद्रुमनाम्नि ग्रन्थे अदादिगण-
प्रकाशो नाम तृतीयः पल्लवः।

वान्ता दिवूच क्रीडायां जयेच्छायां पणौ द्युतौ ।
स्तुतौ गतौ च ईदन्ता प्रींङ्च प्रीतावथो गतौ ॥ १ ॥

ईङ्च्, पाने तु पीङ्च् स्यात् ऋदन्तौ जरसि स्मृतौ ।
जॄष् झॄष्च् अथ ओदन्ता दों छोंच च्छेदनार्थकौ ॥२॥
अन्तकर्मणि षोंच स्यात् तक्षणे शोंच कान्तकः ।
शकींच मर्षणे चान्तः शुचॄगैच् पूतितार्थकः ॥ ३ ॥
जान्ता रञ्जींच् रागेषु युजिंच् समाधौ सृजिंच् विसर्गार्थः ।
डान्तो व्रीडच् व्रीडे तान्तौ वरणे वृतूचि स्यात् ॥ ४ ॥
नृतैच नर्त्तने थान्तौ पूतिभावे कुथच् स्मृतः ।
पुथच् तु हिंसने दान्ताः खिदिंच् दैन्ये पदिंच् गतौ ॥५॥
विदिंच भुवि धान्ताः षट् गुधच् तु परिवेष्टने ।
व्यधंच ताडने राधंच् वृद्धौ ज्ञाने मतौ बुधिंच् ॥ ६ ॥
अनोरुधिंच कामार्थः संप्रहारे युधिंच वै ।
नान्ता जनैचि तु प्रादुर्भावेऽथ प्राणनेऽनिच ॥ ७ ॥
मनिंच् ज्ञानेऽथ पान्ताः स्युः पुष्पच् विकसनार्थकः ।
क्षिपंच प्रेरणे दीप्तौ दीपैचि स्याद् शपींच तु ॥ ८ ॥
आक्रोशे वैश्वर्ये तपिंच मान्तास्तिम ष्टिम ष्टीमच् ।
तीमच् तथाऽर्द्रभावे रान्ता घूरैङ् ज्वरैचि ॥ ९ ॥

जरसि, गताविह धूरैङ् गूरैचि, स्तम्भने तु श्रूरैचि ।
तूरैचि तु त्वरायां घूराद्या हिंसनेऽपि स्युः ॥ १० ॥
वान्ता उतौ षिवूच श्रिवूच गतिशोषयोर्निरसने तु ।
स्यातां ष्ठिवू क्षिवूच् द्वौ शान्तास्तु लिशिंच् अल्पत्वे ॥११॥
काशिच् दीप्तौ वाशिच् शब्दे तापे क्लिशिंच षान्तौ द्वौ ।
इषच गमने क्षमायां मृषींच सान्तास्त्रसैच् भये ॥१२॥
प्युसच दहने क्नसूच तु दीपनकौटिल्ययोः ष्णसूच इति ।
स्यान्निरसने त्र्यथेऽमी हान्ताः षह षुह च शक्त्यर्थौ ॥१३॥
बन्धे णहींच कथिताः षट्षष्टिरमी अथात्र पुष्यादिः ।
षान्तः पुषंच्च पुष्टौ चान्तः स्यादुचच समवाये ॥ १४ ॥
दान्तः क्लिदौंच आर्द्रभावे ञिमिदाच् स्नेहनार्थः ।
ञिक्ष्विदाच् मोचने चाथ गात्रप्रक्षरणे ष्विदांच् ॥ १५ ॥
धान्ताः सप्त श्रुधंच् शोचे क्रुधंच् कोपे क्षुधंच् तु ।
बुभुक्षायामृधूच् वृद्धौ निष्पत्त्यर्थे षिधूंच् वै ॥१६॥
गृधूच अभिकाङ्क्षायां रधौच पाकहिंसयोः ।
टान्तो लुटच् विलोटेऽथ नव पान्ताः कुपच् क्रुधि ॥१७॥

गुपच्च व्याकुलतायां डिपच्च क्षेपे तृपौच सौहित्ये ।
युप रुप लुपच्च विमोहे दृपौच मुद्गर्वयोरुदितः ॥ १८ ॥
ष्टूपच्च तु समुच्छ्राये भान्ता णभ तुभच्च हिंसने स्याताम्।
गार्ध्ये लुभच्च क्षुभच्च तु संचलने षट् तु शान्ताः स्युः ॥१९॥
कृशच्च तनुत्वे वृशच्च तु वरणे भ्रंशू भृशूच् अधः पतने ।
कुशच्च श्लेषेऽथ नशौच् अदर्शने षान्तका विभागे तु ॥२०॥
प्युषच् दुषंच वैकृत्ये ञितृषच्च तु तृषि, प्लुषूच्च दाहार्थे ।
तुष्टौ तुषं हृषच्च द्वौ शुषंच शोषे रुषंच रोषे ॥ २१ ॥
आलिङ्गने श्लिषंच् स्यात् सान्ताः श्लेषे कुसच्च जसूच्च मोक्षे ।
प्युस पुसच्च विभागार्थौ यसूच् प्रयत्ने मसैच्च परिणामे ॥२२॥
विसच्च प्रेरणे ऽसूच्च क्षेपणेऽथ तसू दसूच् ।
उपक्षयार्थौ स्तम्भे तु वसूच् मुसच्च खण्डने ॥ २३ ॥
उत्सर्गे तु बुसच् मान्ता उपशान्तौ शमू दमूच् ।
भ्रमूंच् अनवस्थाने क्षमौच्च सहने स्मृतः ॥ २४ ॥
श्रमूच्च खेदतपसोः काङ्क्षायां तु तमूच् मतः ।
क्लमूच् ग्लानौ हि दान्तस्तु मदैच् हर्षेऽष्टकं शमाम् ॥२५॥
अक्लमूच् सप्तकं चैतत् हान्ता उद्गिरणे ष्णुहौच्

जिघांसायां द्रुहौच् प्रीतौ ष्णिहौच् मुहौच् मोहने ॥२६॥
पुष्याद्दिः सप्तषष्ट्या वृत् स्वादिषूदन्तकं द्वयम् ।
षूङौच प्राणिप्रसवे परितापे तु दूङ्च ॥ २७ ॥
ईदन्ताः स्युर्मीङ्च हिंसायां दीङ्च क्षये रीङ्च ।
श्रवणे लीङ्च् श्लेषे डीङ्च गमने ह्यनादरे धीङ्च् ॥२८॥
वरणे व्रीङ्च ख्यातः सूयत्याद्या नवेत्यथ ।
द्विचत्वारिंशदधिकं शतं सर्वे दिवादयः ॥ २९ ॥
इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवस्तुरीयोऽयम् ॥३०॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-
प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठ-
श्रीहेमविमलसूरिविजयमानराज्ये मण्ड-
तपण्डितकुलपं-कुलचरणगणिशिष्यह-
र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन-
वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि
ग्रन्थे दिवादिगणप्रकाशो नाम
चतुर्थः पल्लवः ॥

षुंग अभिषवे पूर्वमिदन्ता बन्धनार्थकः ।
षिंगट् चिंगट् तु चयने हिंट् वृद्धिगमनार्थयोः ॥ १ ॥
डुमिंगट् प्रक्षेपणे स्यात् शिंगट् तनूकृतौ स्मृतः ।
उदन्तौ श्रवणे श्रुंट टुदुंट उपतापने ॥ २ ॥
ऊदन्तः कम्पने धूगट् ऋदन्ताः पञ्च कृंगट ।
हिंसायां वरणे वृगट् स्तृंगट् आच्छादनार्थकः ॥ ३ ॥
पृंट् प्रीतौ स्मृंट् पालने च गान्तास्तिगट हिंसने ।
कान्तौ शक्लृंट शक्तौ स्याच्चिकट् तिगिव घान्तकौ ॥४॥
ष्टिघिट् आस्कन्दने प्रोक्तः षघट् तिकिव धान्तकाः ।
राधं साधंट संसिद्धौ ऋधूट् वृद्धौ हि पान्तकौ ॥५॥
तृपट प्रीणने व्याप्तौ त्वाप्लृंट अथ भान्तकः ।
दम्भूट दम्भेऽथ वान्तौ द्वौ कृवुट् करणहिंसयोः॥ ६ ॥
धिवुट् गतावथो शान्तोऽशौटि व्याप्तौ हि षान्तकः ।
प्रागल्भ्ये ञिधृषाट् एकोनत्रिंशत्स्वादयो मताः ॥ ७ ॥

इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।

कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवोऽत्र पञ्चमकः ॥८॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-
प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठ-
श्रीहेमविमलसूरिविजयमानराज्ये मण्ड-
तपण्डितकुलपं-कुलचरणगणिशिष्यह-
र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन-
वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि
ग्रन्थे स्वादिगणप्रकाशो नाम
पञ्चमः पल्लवः ॥

तुंदीत व्यथने प्रोक्त इदन्ता रिंत पिंत् गतौ ।
क्षिंत निवासे च धिंत् स्याद्धारणेऽथ ऋदन्तकाः ॥ १ ॥
मृंत प्राणत्यागे व्यायामे पृङ्त धृङ्त तु स्थाने ।
दृङत स्यादादरे ऊदन्तः प्रेरणे षूत ॥ २ ॥
ॠदन्तौ कॄत स्याद्विक्षेपे गॄत निगरणे खान्तः ।

लिखत तु वर्णन्यासे चान्ताः स्युस्त्वचत संवरणे ॥३॥
जर्चत झर्चत परिभाषणे ऋचत संस्तुतावथ च्छेदे ।
ओव्रश्चौत छान्ताः षट् उछैद्विवासे विछत गमने ॥ ४ ॥
मिछत स्यादुत्क्लेशे ञ्चीप्सायां तु प्रछंत् उछुत उञ्छे ।
करणप्रलये मूर्त्ते भावेऽपि ऋछन्मतो जान्ताः ॥ ५ ॥
टुमस्जोंत तु शुध्यर्थौ जर्जत्तु परिभाषणे ।
सृजंत तु विसर्गार्थे धातुरुब्जत आर्जवे ॥ ६ ॥
भुजोंत इति कौटिल्ये ऽथो ओलस्जैति ओलजैङ् ।
व्रीडार्थावोविजैति स्यात् साध्वसे कम्पनेऽपि च ॥ ७ ॥
तथा रुजोंत भङ्गार्थः सङ्गे ष्वाञ्जित संमतः ।
भ्रस्जींत् पाकेऽथ डान्ताः स्युः कडत् मदे जुडत् गतौ ॥८॥
सुखने पृडत् मृडत द्वौ झान्तौ जर्झत्तु जर्जसम उद्झत ।
उत्सर्ग इह तु णान्ताः पुणत् शुभेऽथो मुणत्प्रतिज्ञाने ॥९॥
शब्दोपकरणयोश्च तु कुणत पृणत्प्रीणने मृणत हनने ।
द्रुणत कुटिलत्वगत्योश्च कुटिलतायां तुणत धातुः ॥१०॥
घूण घूर्णत् भ्रमणार्थावथ तान्तो ग्रन्थहिंसयोस्तु चृतैत् ।

धान्तो विधत विधाने नान्तौ जन शुनत गमन इह दान्तौ ११
अवसादने तु षद्लृंत् णुदंत तु प्रेरणेऽथ पान्तौ द्वौ ।
स्पर्शे छुपंत् क्षिपींत तु णुदंतवन्नव तु फान्ताः स्युः ॥१२॥
ऋफ ऋंफत् हिंसायां रिफत युधादानयोश्च कथनेऽपि।
दृफ दृम्फत उत्क्लेशे गुफ गुम्फत ग्रथनके स्याताम् ॥१३॥
तृफ तृम्फत तृप्त्यर्थौ भान्ताः षट् पूरणे तु उभ उम्भत।
शुभ शुम्भत शोभार्थौ ग्रन्थे तु दृभैत् विमोहने तु लुभत १४
रान्तास्तु कुरत शब्दे विलेखने क्षुरत खुरत तु च्छिदिव ।
संवेष्टने मुरत् स्यात् घुरत्तु भीमार्थशब्दयोः स्फुरत ॥१५॥
स्फुरणेऽग्रगतौ तु पुरत दीप्त्यैश्वर्यार्थयोः सुरत लान्ताः ।
स्फुलत स्फुरवत् हिलत तु हावकृतौ सिल शिलत उञ्छे १६॥
इलत क्षेपणगमनस्वप्नेषु चलत्तु विलसने किलत ।
श्वैत्यक्रीडनयोः स्यात्तिलत स्नेहे चिलत वसने ॥१७॥
त्रिलत वरणे णिलत् स्याद्गहनेऽथ श्लेषणे मिलत्प्रोक्तः ।
भेदन इह बिलत भवेत् शान्तास्तु रुशं रिशंत हिंसायाम् १८
गमने लिशंत विशंत प्रवेशनेऽथो मृशंत आमर्शे ।

अतिसर्जने दिशींत स्पृशंत संस्पर्शे इह षान्ताः ॥ १९॥
मिषत स्पर्द्धेऽथ कृषींत् विलेखने स्यात् ऋषैत् गतौ इषत ।
इच्छायां प्रीतिनिषेवणयोस्तु जुषैति अथ हान्ताः ॥ २० ॥
तृहौ तृंहौ स्तृहौ स्तृंहौत् हिंसायामुद्यमे वृहौत् ।
एकादशाधिकमभूच्छतं चान्तौ तु मोक्षणे ॥ २१ ॥
मुच्लृंती क्षरणे तु स्यात् षिचींत् पान्तौ लिपींत तु ।
उपदेहेऽथ लुप्लृंती च्छेदने दान्तकं द्वयम् ॥ २२ ॥
विद्लृंती लाभार्थे परिघातार्थे खिदंत तान्तास्तु ।
छेदे कृतैत शान्तौ ऽवयवे तु पिशत मुचादिरष्टौ वृत् ॥२३॥
टान्तः कुटत कौटिल्ये उदन्तानि स्वरे कुंङत् ।
पुरीषोत्सर्जने गुंत ध्रुंत् गतिस्थैर्ययोर्मतः ॥ २४ ॥
ऊदन्ताः कुङवत् कूङत् णूत स्तवे धूत विधूनने ।
जान्तः शब्दे गुजत् चान्तौ कुचत् सङ्कोचने स्मृतः ॥२५॥
व्यचत् व्याजीकृतौ टान्तास्त्रुट च्छुट चुटत् छिदि ।
प्रतिघाते घुटत् श्लेषे पुटत विकसने स्फुटत् ॥ २६ ॥
आक्षेपणमर्दनयोर्मुटत तुटत कलिकृतौ तथा ठान्तः ।

पुटसदृशो लुठत स्यादथ डान्ताः कुडत घसनार्थः ॥२७॥
बाल्ये च कुडत कथितो जुटत्तु बन्धेऽथ गुडत रक्षायाम् ।
स्थुड लुड थुडत्तु संवृत्यर्था उत्सर्जने तु वुडत ॥ २८ ॥
तुड तोडने ब्रुडत भ्रुडत् सङ्घाते मज्जने तु दुड हुडत ।
त्रुड णान्तश्चुणत च्छिदि पान्तः क्षेपे डिपत रान्ताः ॥२९॥
स्फुरत स्फुरणे स्फुलत व्रजे च चुणवत् छुरत् गुरैति कृतौ ।
ऊनचत्वारिंशत्तु कुटादिर्धूनषष्टिः शतमखिलाः ॥ ३० ॥
इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवः षष्ठः ॥ ३१ ॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-
प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठ-
श्रीहेमविमलसूरिविजयमानराज्ये मण्डि-
तपण्डितकुलपं-कुलचरणगणिशिष्यह-
र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन-
वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि

## ग्रन्थे तुदादिगणप्रकाशो नाम
## षष्ठः पल्लवः ॥

अथ धान्तौ रुधृंपी आवरणे भासने ञिइन्धैपि ।
चान्ताः पञ्च वृचैप तु वरणे सम्पर्चने तु पृचैप् ॥ १ ॥
विचृंपी पार्थक्ये रिचृंपी स्याद्विरेचने तञ्चूप् ।
सङ्कोचनेऽथ दान्ताश्छिदृंपी स्याद् द्विधाकरणे ॥ २ ॥
क्षुदृंपी पेषे उच्छृदृंपी तु दीप्तिदेवनयोः ।
ऊतृदृंपी हिंसानादरयोर्दारणे तु भिदृंपी ॥ ३ ॥
ऊंदैप क्लेदन इह खिदिंप दैन्ये विचारणे तु विदिंप् ।
जान्ता अञ्जौप् व्यक्तिम्रक्षणगमनेष्वथो भञ्जोंप् ॥ ४ ॥
आमर्दनेऽथ तञ्चौप् सङ्कोचन ओविजैप् भयचलने ।
अभ्यवहृतिपालनयोर्भुजंप योगे तु युजृंपी ॥ ५ ॥
सान्तो हिसुप प्रमये हान्तः स्यात्तद्वधेऽथ तृहप इति ।
षान्तौ तु चूर्णनार्थे पिष्लृंप विशेषणे तु शिष्लृंप ॥ ६ ॥
तान्तः कृतैप वेष्टन इति षट्विंशतिरभूद् रुधादिगणः ।

आद्यः स्वयं परस्मैमुखो विभागोऽनुबन्धफलात् ॥ ७ ॥
इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवोऽत्र सप्तमकः ॥ ८ ॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरि-
पट्टप्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्र-
तिष्ठश्रीहेमविमलसूरिविजयमानराज्ये
मण्डितपण्डितकुलपं-कुलचरणग-
णिशिष्यहर्षकुलप्रणीते सार्थकहैम-
धातुप्रकटेऽनवद्यपद्यबन्धे श्रीकवि-
कल्पद्रुमनाम्नि ग्रन्थे रुधादिगण-
प्रकाशो नाम सप्तमः पल्लवः ।

---

नान्ताः समे तनूयी विस्तारे याचने वनूयि भवेत् ।
अवबोधने मनूयि क्षणूग् क्षिणूयी तु हिंसार्थौ ॥ १ ॥
दाने मतः षणूयी गमनार्थे संमतः किल ऋणूयी ।

अदनार्थे तु तृणूयी भासि घृणूयी नव तनाद्याः ॥ २ ॥
इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवोऽष्टमकः ॥ ३ ॥

**इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठ-श्रीहेमविमलसूरिविजयमानराज्ये मण्डित-पण्डितकुलपं-कुलचरणगणिशिष्यह-र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन-वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि ग्रन्थे तनादिगणप्रकाशो नामाष्टमः पल्लवः ।**

---

आदावीदन्ताः षट् डुक्रींगश् द्रव्यविनिमये प्रींगश् ।
तृप्त्यभिलाषे श्रींगश् पाके मींगश तु हिंसायाम् ॥१॥
व्रींश् वरणे भ्रींश् भरणे आदन्तो ज्ञांश बोधन इदन्तौ ।

क्षिषश् हिंसायां स्यात् षिंगश बन्धेऽथ ऊदन्तौ ॥ २ ॥
कूगश शब्दे द्रूगश् हिंसायां द्वावुदन्तकौ स्कुंगश् ।
आप्रवणेऽथो युंगश बन्धे डान्तो मृडश सुखने ॥ ३ ॥
ठान्तो हेठश् भूतप्रादुर्भावेऽथ दान्तमृदश् क्षोदे ।
थान्ता विलोडने स्यान्मन्थश् ग्रन्थश् तु भवति सन्दर्भार्थः॥
प्रतिहर्षणमोचनयोः श्रन्थश् स्यात् कुन्थंश क्लेशे ।
धान्तौ बन्धे बन्धंश् इह रोषे गुधश शान्तौ द्वौ ॥५॥
बाधे क्लिशौश कथितोऽशश धातुर्भोजने त्रयो भान्ताः ।
णभ तुभश हिंसनार्थौ संचलने क्षुभश सप्त षान्ताः स्युः॥६॥
मुषश स्तेये इषश तु आभीक्ष्ण्ये कुषश निष्कर्षे ।
प्रुषयुग् प्लुषश स्नेहनसेचनयोः पूरणार्थौ च ॥ ७ ॥
विषश वियोगे पुषश तु पुष्टौ वान्तस्तु खवश हेठशवत् ।
सान्तौ ध्रसूश उञ्छे ऋदन्तको वृङश सम्भक्तौ ॥ ८ ॥
हान्त उपादानार्थे ग्रहीश ऊदन्तकास्त्रयः पूगश् ।
पवने लूगश् छेदे स्याद् धूगश कम्पनेऽथ ईदन्ताः ॥ ९ ॥
रींश गमनरोषणयोर्लीश स्यात् श्लेषणे गतौ ल्वींश ।

ब्लीँश तु वरणार्थः स्यादादन्तो ज्यांश हान्यर्थः ॥ १० ॥
ऋदन्ताः कॄ मॄ शॄश् हिंसायां नॄश नये गतौ ।
ऋश जॄश् वयोहानौ बॄश् भरणे भॄश भर्जने च भवेत्॥ ११॥
कॄगश् हिंसायां स्यात् वॄगश वरणे विदारणे दॄश ।
पॄश् पालनपूरणयोः स्तॄगश आच्छादने प्रोक्तः ॥ १२॥
गॄश् शब्दे वृत् प्वादिर्द्वाविंशत्यैकहीनया ल्वादिः ।
धातुभिरन्ये तेऽष्टत्रिंशत् क्र्यादौ समेऽपि षष्टिः स्युः ॥ १३

इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽयमपूरि पल्लवो नवमः ॥ १४॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-
प्रभावकश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठ-
श्रीहेमविमलसूरिविजयमानराज्ये मण्डि-
तपण्डितकुलपं-कुलचरणगणिशिष्य-
हर्षकुलप्रणीते सार्थकहैमधातुप्रकटे-
ऽनवद्यपद्यबन्धे श्रीकविकल्पद्रुमना-

## म्नि ग्रन्थे कथादिगणप्रकाशो नाम नवमः पल्लवः ॥

चुरण स्तेय ऋदन्तौ स्रवणे घृण पूरणे तु पृण् कान्ताः ।
नक्कण धक्कण नाशे चुक्कण चक्कण उभौ व्यथने ॥१॥
घल्क श्वल्कण कथने टकुण स्याद्बन्धनेऽर्कण स्तवने ।
हिष्किण किष्किण हनने निष्किण परिमाण इह चान्तौ ॥२॥
पिच्चण तु कुट्टनार्थे विस्तारे पचुण जान्तास्तु ।
ऊर्जण् जीवनबलयोः स्याद्गज मार्जण निनादार्थौ ॥ ३ ॥
तिजण निशाने पूजण पूजायां क्षजुण कृच्छ्रजीवनके ।
व्रज वजण गतौ मार्गण संस्कारे रुजण हिंसायाम् ॥ ४ ॥
तुजु पिजुण बले दाने निकेतने हिंसनेऽपि तर्जिण तु ।
तर्जन इह च च्छान्तो म्लेच्छण अव्यक्तगिरि टान्ताः ॥ ५ ॥
तुट चुट चुटु छुटण स्युः छेदे कुट्टण कुत्सनार्थश्च ।
पुट्टयुत चुट्ट षुट्टण अल्पीभावे विभाजने तु वटुण् ॥ ६ ॥
पुट मुटण चूर्णनार्थावट्ट स्मिटण स्मृतावज्ञायाम् ।

लुण्टण स्तेये चोक्तो नटण भ्रंशे स्निटण स्नेहे ॥ ७ ॥
षट्ट स्फिटण प्रमये कीटण स्याद्वर्णने रुटण रोषे ।
घट्टण चलने खट्टण संवरणे स्फुट्टण परिहासे ॥ ८ ॥
त्रुटिण च्छेदे कूटिण भवेदप्रमादेऽथ ठान्तकाः शुठुण् ।
शोषार्थे गुठुण स्याद्वेष्टन इह शुठण आलस्ये ॥ ९ ॥
शठिण श्लाघायां स्यात् शठ श्वठण श्वठुण संस्करणगत्योः ।
डान्ताः पीडण गहने ईडण् स्तवने चडुण कोपे ॥ १० ॥
ओलडुण क्षेपार्थे चुडुण च्छेदेऽथ भडुण कल्याणे ।
परिहासे स्फुडुण भवेदुपसेवायां लडण ख्यातः ॥ ११ ॥
भेदे खड खडुण द्वौ कडुण स्यात्खण्डने च कुडुण इति ।
रक्षार्थे मडुण भवेद्भूषायां पिडुण सङ्घाते ॥ १२ ॥
वेष्टनरक्षणयोः स्याद् गुडुण जुडण् प्रेरणे तडण घाते ।
णान्तास्तु चूण तूणण कूणिण संकोचने श्रणण् दाने ॥ १३ ॥
जुडण इव चूर्ण वर्णण पूणण सङ्घातनेऽथ संपूर्त्तौ ।
तूणिण आशंसायां भ्रूणिण् तान्ताश्चितुण स्मृत्यास् ॥ १४ ॥
संवेदने चितिण स्यात् मुस्तण पूणणसमस्तथा कृतण ।

संशब्दनेऽथ गमने स्वर्त्तण वै अर्दने वस्तिण् ॥ १५ ॥
पुस्तण बुस्तण तु द्वावनादरेऽप्यादरेऽथ थान्ताः स्युः ।
पथुण गतौ प्रतिहर्षे श्रथण प्रक्षेपणे तु पृथण ॥ १६ ॥
प्रथण प्रख्यानार्थे दान्ताः संचोदने चुदण धातुः ।
छर्दण वमने गुर्दण निकेतने च्छदण संवरणे ॥ १७ ॥
मिदुण स्नेहे धान्ताः संयमने वन्धयुग्वधण, वर्द्धण ।
छेदनपूरणयोः स्याद् हिंसायां बुधुण् अर्दने गन्धिण ॥१८॥
गर्द्धण काङ्क्षे पान्ता डपु डिपु डपि डम्पि डिम्पि डिपिण स्युः।
सङ्घाते छपुण गतौ क्षपुण क्षान्तौ डिपण क्षेपे ॥ १९ ॥
शूर्पण माने ह्लपण व्यक्तायां वाचि ननु समुच्छ्राये ।
ष्टूपण बान्ताः पुर्बण निकेतने छादने तु कुबुण ॥२०॥
डबु डिबुण क्षेपार्थौ सम्बण संबन्धनेऽथ लुबु तुबुण ।
द्वावर्दनेऽथ शुल्बण सर्जनमानद्वये भान्तौ ॥ २१ ॥
डम्भि डिम्भिण सङ्घाते मान्ता आलोचने शमिण् ।
कुस्मिण् कुस्मयने ख्यातो वितर्के तु स्यमिण् भवेत् ॥२२॥
यमण परिवेषणेऽथो यान्तो व्ययण क्षयेऽथ रान्ताः स्युः ।

कुट्टण असत्यवचने श्वभ्रण् गमनेऽथ गूरिण स्यात् ॥२३॥
उद्योगे यन्त्रुण स्यात् संकोचे गुप्तभाषणे मन्त्रिण ।
तन्त्रिण कुटुम्बधारण इह लान्ता ललिण ईप्सायाम् ॥२४॥
कल किल पिलण क्षेपेऽथोत्क्षेपे दुलण तुलण उन्माने ।
बुलण निमज्जन इलण प्रेरण इह तलण तु प्रतिष्ठायाम् २५॥
पुलण समुच्छ्राये स्यात्तिलण स्नेहे क्षलण तु शौचार्थः ।
बिलण तु भेदे मूलण रोहण इह पलण रक्षार्थः ॥२६॥
जलण अपवारणार्थे चलण भृतौ वान्त एक इह सान्त्वण ।
सामविधौ शान्ताः स्युर्धूशण कान्तीकृतौ स्पशिण ॥२७॥
ग्रहणश्लेषणयोः स्याद्दंशिण दशनेऽथ षान्तकाः प्युषण ।
उत्सर्गे श्लिषण समाश्लेषे लूषण तु हिंसायाम् ॥ २८ ॥
रुषण तु रोषे सान्ताः पुंसण् अभिमर्दने जस ब्रूस ।
पिसण च हिंसार्थाः स्युः पसुण विनाशेऽथ रक्षणे जसुण ॥
भर्त्सिण तु तर्जनार्थे दंसिण दशनेऽपि दर्शने हान्तौ ।
बर्हण जसवत् ष्णिहण स्नेहे क्षान्ताः परिग्रहे पक्षण् ॥३०॥
भक्षण अदने म्रक्षण म्लेच्छे लक्षीण दर्शनाङ्कनयोः ।

यक्षिण पूजायां स्यात् त्र्यशीतिशतमित्यमी गादिताः ॥३१॥
अथ लक्षिणपर्यन्ता अर्थविशेषे स्युरेष्वथादन्तः ।
ज्ञाण् मारणादिषु नियोजनेऽप्युदन्तौ तु सहने च्युण ॥३२॥
युणि तु जुगुप्सायामथ ऊदन्तो भूण मिश्रण् ऋदन्तः ।
विज्ञाने गॄणि भवेत्कान्ता आस्वादने तु रक लकण् द्वौ ॥
बुक्कण भषणे प्रोक्तो गान्ता रग लगण रकसमौ लिगुण ।
चित्रीकरणे चान्ताः प्रलम्भने वञ्चिण मुचण तु ॥३४॥
स्यान्मोचनेऽथ चर्चण अध्ययनेऽञ्चण विशेषणे जान्तौ ।
अर्जण तु प्रतियत्ने भजण तु विश्राणने टान्ताः ॥३५॥
घटण तु सङ्घातार्थे प्रतापने कुटिण चटयुतस्फुटण ।
भेदे हिंसार्थौ इह णान्तस्तु निमीलने कणण ॥ ३६ ॥
तान्तो यतण निकारोपस्कारार्थद्वये निरः शुद्धौ ।
दान्ता विदिण निवासाख्यानार्थे चेतनेऽप्यथो षूदण ॥३७॥
क्षरणेऽप्याङः क्रन्दण सातत्ये ष्वदण भवति आस्वादे ।
आङः सकर्मकोऽयं चुरादिकार्योऽथ मुदण संसर्गे ॥३८॥
शब्दण स्यादुपसर्गाद्भाषाविष्कारयोर्मदिण तृप्तौ ।

धान्तः शृधण् प्रसहने नान्तः स्तम्भे मनिण् पान्तः ॥३९॥
कृपण अवकल्कनार्थौ भान्तः स्याज्जभुण नाशने मान्तः ।
रोगार्थेऽमण रान्तौ पूरण आप्यायनेऽथ चरण ॥ ४० ॥
निःशंसयेऽथ लान्ता विदारणे दलण बलि भलिण धातू ।
आभण्डनेऽथ वान्तौ दिविण् परे कूजनेऽथ दिवण् ॥४१॥
पीडायां शान्तः स्यात् पशण तु बन्धेऽथ षान्तकाः पशवत् ।
पषण अथ शक्तिबन्धे वृषिण विशब्दे भवेद् घुषृण ॥४२॥
आङ्पूर्वः क्रन्देऽसौ पुषण धृतौ भूषणे भवेद्भूषण ।
सान्ता ग्रसण ग्रहणे निवारणे त्रसण ताडने तु जसण् ॥
कुत्सिण तु अवक्षेपे लसण तु शिल्पप्रयुञ्जने ख्यातः ।
भूषणवत् तसुण वसण् स्नेहच्छेदावहरणेषु ॥ ४४ ॥
उत्क्षेपे ध्रसण भवेत् हान्तोऽर्हण् पूजनेऽथ कान्तौ द्वौ ।
लोकृयुततर्क घान्ता रघु लघु चान्तस्तु लोचृ छान्तस्तु ॥
विछ जान्ता अजु तुजु पिजु
लजु लुजु भजु टान्तकाः पट पुटश्रित् ।
लुट घट घट्ट तान्तः स्याद्वृत थान्तः पुथ अथो दान्तः ॥४६॥

नद धान्तो वृध पान्ताः कुप धूप गुप त्रयोऽथ शान्तौ द्वौ ।
दशु कुशु सान्तास्त्रसु पिसु कुसु दसु वान्तस्तु चीव हान्तास्तु।
वर्ह वृहु वल्ह अहु वहु महु सर्वेऽमी णितश्च भासार्थाः ।
क्षान्तौ मोक्षण असने लक्षिण् आलोचने हि षण्णवतिः ॥
अथ दर्शयाम्यदन्तान् अङ्कण लक्षण इहाङ्गण पदे च ।
अन्वेषणे मृगणि वै सुख दुःखण तत्क्रियायां द्वौ ॥४९॥
श्लेष्कण तु दर्शनार्थेऽघण् पापकृतौ रचण् पुनर्यत्ने ।
सूचण पैशुन्यार्थे सभाजण प्रीतिसेवनयोः ॥ ५० ॥
भाजण पृथक्कृतौ स्यात्प्रकाशने लज लजुण् पुटण् सङ्गे।
कूटण दाहे खोटण् क्षेपे पट वटण तु ग्रन्थे ॥५१॥
खेटण अदनेऽथ वटुण विभाजने श्वठ शठण वचसि तथ्ये॥
दण्डण दण्डनिपाते तूणण् सङ्कोचने ख्यातः ॥ ५२ ॥
वर्णण् विस्तृतिवर्णक्रियागुणाख्यासु गणण संख्याने ।
पर्णण तु हरितभावे व्रणण वपुश्चूर्णने भिदि तु कर्णण् ॥५३॥
कुण गुण केतण आमन्त्रणे गतौ वा पतण् तथा वातण्।
सुखसेवनयोश्चार्थणि याञ्चायां कथण वाक्प्रबन्धार्थः॥५४॥

दौर्बल्ये श्रथण भवेच्छेदण द्वैधीकृतौ गदण गर्जे ।
पदाणि गतौ स्याद् दृष्ट्युपसंहारेऽन्धण् स्तनण् गर्जे ॥५५॥
ध्वनण निनादे स्तेनण् चौर्ये ऊनण् तु परिहाणे ।
दौर्बल्ये कृपण भवेत् रूपण् रूपक्रियायां वै ॥ ५६ ॥
क्षप लाभण् प्रेरण इह भामण क्रोधेऽथ सान्त्वने सामण् ।
संग्रामणि संग्रामे गोमण् उपलेपने ख्यातः ॥ ५७ ॥
स्तोमण् श्लाघायां स्यात् श्रामण आमन्त्रणे व्ययण ।
वित्तसमुत्सर्गार्थे आक्षेपे स्वरण भेदे तु ॥ ५८ ॥
छिद्रण कर्मसमाप्तौ पारण तीरण च वरण ईप्सायाम् ।
क्रीडायां तु कुमारण् शैथिल्ये कत्र गात्रण् द्वौ ॥५९॥
सूत्रण विमोचनार्थे चित्रण् चित्रक्रियाकदाचिद्दृष्ट्योः ।
मूत्रण प्रस्रवणे स्यान्मिश्रण संपर्चनेऽथ दुर्बलतायाम्॥६०॥
शारण विक्रान्तौ द्वौ शूरणि वीराणि च सत्राणि तु ।
संदानार्थे ख्यातः पल्यूलण् लवनपवनार्थः ॥६१॥
उपधारणे तु शीलण् कलण तु संख्यानगमनयोः कालण् ।
वेलण् उपदेशार्थौ स्थूलणि परिबृंहणेऽथ गर्वणि तु ॥६२॥

मानेऽथ विभजनेंऽशण् मृषण क्षान्तौ पषण् अनुपसर्गः ।
अन्वेषणे गवेषण् आस्वादस्नेहयोस्तु रसण् ॥६३॥
वासण उपसेवायां निवासण च्छादने रहुण् गमने ।
रहण त्यागे गृहाणि ग्रहणेऽथो कल्कने चहण ॥६४॥
विस्मापने तु कुहाणि प्रेप्सायां स्पृहण महण पूजायाम् ।
रूक्षण पारुष्ये स्यादिति संपूर्णाश्चतुर्णवतिः ॥६५॥
युजादिरुच्यते जान्तो युजण् संपर्चने मतः ।
ईदन्ता मीण् मतौ प्रीगण् तर्पणे लीण् द्रवीकृतौ ॥६६॥
ऊदन्तः कम्पने धूगण् ऋदन्त आवृतौ वृगण् ।
ॠदन्तौ जॄण् वयोहानौ कान्तौ द्वौ चीक शीकण ॥६७॥
आमर्षणार्थौ गान्तस्तु मार्गण् अन्वेषणार्थकः ।
चान्ता अर्चिण पूजायां पृचण् सम्पर्चनार्थकः ॥६८॥
रिचण् वियोजनार्थे च प्रोक्तो वचण भाषणे ।
जान्तौ वृजैण् वर्जने च शौचालङ्कारयोर्मृजौण् ॥६९॥
ठान्तः कठुण शोकार्थे थान्ताः क्रथण हिंसने ।
श्रथण् बन्धे च सन्दर्भे श्रन्थ ग्रन्थण दान्तकाः ॥७०॥

छृदण् सन्दीपनेऽथार्दिण् हिंसायां भाषणे वदिण् ।
आङः सदण् गतौ प्रोक्तश्छदण् तु अपवारणे ॥७१॥
धान्तः शुन्धिण शुद्धौ नान्तौ द्वौ पूजने तु मानण् स्यात् ।
श्रद्धाऽऽघाते तु तनूण् उपसर्गादेष दैर्घ्यार्थः ॥७२॥
भान्तौ द्वभैण भीतौ पान्ता आप्लृण तु लम्भनेऽथ तपिण् ।
दाहे तृपण प्रीणन इह सान्तो हिसुण हिंसायाम् ॥७३॥
षान्ता मृषिण् तितिक्षायां जुषण् तु परितर्कणे ।
स्यादसर्वोपयोगे तु शिषण् अतिशये तु वेः ॥७४॥
घृषण् प्रसहने रान्त ईरण् क्षेपेऽथ हान्तकौ ।
गर्हण् विनिन्दार्थः स्यात् मर्षणे तु षहण मतः ॥७५॥
एवं पूर्णाश्चत्वारिंशद्रूपाधिका युजादिगणसर्वे ।
चतुःशती चतुरधिकाः स्युश्चुरादयो बहुलम् ॥७६॥
अदन्ता अप्यनुक्ताः स्युस्तथा भ्वादिगणाष्टके ।
निवेशितास्ते सर्वेऽपि बहुलं स्युश्चुरादयः ॥७७॥
अत्रैकाशीत्युत्तरनवशतसंयुक्सहस्र १९८१ संख्याकाः ।
आर्यागीतिश्लोकैर्भ्वादिगणधातवो दब्धाः ॥७८॥

इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते ।
कविकल्पद्रुमनाम्नि ग्रन्थेऽयमपूरि पल्लवो दशमः ॥ ७९ ॥

इति तपागच्छाधिराजश्रीलक्ष्मीसागरसूरिपट्ट-
प्रभावकश्रीसुमतिसाधुसूरिपट्टप्रभावकप्रति-
ष्ठश्रीहेमविमलसूरिविजयमानराज्ये माण्ड-
तपण्डितकुलपं-कुलचरणगणिशिष्यह-
र्षकुलप्रणीते सार्थकहैमधातुप्रकटेऽन-
वद्यपद्यबन्धे श्रीकविकल्पद्रुमनाम्नि
ग्रन्थे चुरादिगणप्रकाशो नाम
दशमः पल्लवः संपूर्णः ॥

---

नवादिभ्योऽतिरिक्ता ये सूत्रेष्वेवोपलक्षिताः ।
सुखज्ञानार्थमुच्यन्ते केऽपि ते सौत्रधातवः ॥ १ ॥

सुगमम् । नवरं, सूत्रेष्वेवोपलक्षिता इति । सूत्रेषु लक्षणसूत्रेष्वेव उपलक्षिता दृष्टा न धातुपाठे ॥ १ ॥

कण्डूग् गात्रविनामे महीङ वृद्ध्यर्च्चयोर्हृणीङ् रोषे ।
लज्जायामपि, मन्तु तु रोषार्थे वैमनस्येऽपि ॥ २ ॥

कण्डूग् गात्रविनामे । "धातोः कण्ड्वादेर्यक्"॥३।४।८॥ कण्ड्वादयो द्विधा । धातवो नामानि च । तत्र धातुभ्यो यक्प्रत्ययः । कण्डूयति, कण्डूयते । क्ये, कण्डूय्यते । अकण्डूयीत् । अकण्डूयिष्ट । अकण्डूयि । कण्डूयांचकार । कण्डूयांचक्रे । कण्डूयिता । "कण्ड्वादेस्तृतीयः"॥४।१।९॥ इति तृतीयावयवस्य द्वित्वे, कण्डूयियिषति; कण्डूयियिषते । णिगि, कण्डूययति । ङे, अकण्डूयियत्; अत्र "अतः"॥४।३।९॥ इति विषयेऽप्यल्लोपात् "स्वरस्य-"॥७।४।११०॥ इति स्थानित्वाभावात् यि इत्यस्य द्वित्वम्; नतु य इत्यस्य । एवमन्यत्रापि । कण्डूयित्वा । कण्डूयिता । कण्डूयितुम् । प्रकण्डूय्य । १ । महीङ् वृद्ध्यर्चयोः । ङकार आत्मनेपदार्थः । महीयते । अमहीयिष्ट । महीययति । अमहीयियत् । महीयिता । २ । हृणीङ् रोषे लज्जायामपि । हृणीयते । 'कथं न पत्या धरणी हृणीयते' । सनि, हृणीयियिषते । णिगि, हृणीययति । ३ । मन्तु तु रोषार्थे वैमनस्येऽपि । मन्तूयति । मन्तूयियिषति । णिगि, मन्तूययति । अद्यतन्यां, अमन्तूयीत् । ४ ॥ २ ॥

असु मानसोपतापे वल्गु तु माधुर्यपूजयोः ख्यातः ।
वेङ्, लाङ्, वेट्, लाट् धौर्त्येऽप्यस्वप्ने पूर्वभावेऽपि ॥ ३ ॥

असु मानसोपतापे । असूयति । अन्ये तु असूङ् दोषाविष्कृतौ रोषे । असूयते, इत्याहुः । असूयियिषति । आसूयीत् । णिगि, असूययति । ङे, आसूयियत् । ५ । वल्गु तु माधुर्यपूजयोः । वल्गूयति । अद्यतन्यां, अव-

ल्गूयीत् । वल्गूयांचकार । ६ । वेङ्, लाङ्, वेट्, लाट् धौर्त्र्येऽस्वप्ने पूर्वभावेऽपि । आद्ययोर्द्वयोर्ङकार आत्मनेपदार्थः । वेयते । लायते । कण्ड्वादेस्तृतीयावयवस्य द्वित्वे, वेयिषिषते । लायिषिषते । अवेयिष्ट । अलायिष्ट । वेयांचक्रे । लायांचक्रे । ८ । वेट्, वेट्यति । लाट्, लाट्यति । १० ॥ ३ ॥

**अल्पार्थकुत्सयोर्लिट् लोट् दीप्तौ इरज इरस ईर्ष्यार्थौ ।**
**भिष्णज उपसेवायां भिषज् चिकित्सार्थ उरस ऐश्वर्ये ॥४॥**

अल्पार्थकुत्सयोर्लिट् । लिट्यति । यक्प्रत्ययस्य कित्त्वान्न गुणः । ११ । लोट् दीप्तौ । लोट्यति । लोटियिषति । लोटिषिषति । लोटियता । लोटिता । "क्यो वा" ॥४।३।८१॥ इति यक्लोपमपि विकल्पेनेच्छन्ति केचित् । १२ । इरज, इरस ईर्ष्यार्थौ । इरज्यति । इरस्यति । १४ । भिष्णज् उपसेवायाम् । भिष्णज्यति; उपसेवते इत्यर्थः । १५ । भिषज् चिकित्सार्थे । भिषज्यति । अयं कुत्सायामित्यन्ये । १६ । उरस ऐश्वर्ये । उरस्यति । उरासिसिषति । १७ ॥ ४ ॥

**नन्द समृद्धौ कुषुभ क्षेपे संभूयस प्रभूतार्थे ।**
**इयसेससौ तु धातू ईर्ष्यायां पुष्प सन्तोषे ॥ ५ ॥**

नन्द समृद्धौ । नन्द्यति । नान्दिता । "क्यो वा" ॥४।३।८१॥ इति यक्लोपस्यापि केषांचिन्मते विकल्पत्वात्; नन्दियता । १८ । कुषुभ क्षेपे । कुषुभ्यति । "अतः" ॥४।३।४॥ इत्यल्लुक्; कुषुबिभिषति । कुषुभिता । कुषुभ्यिता । कुषुभ्यांचकार । "क्यो वा" ॥४।३।८१॥ इति

यकोऽपि लोपे, कुषुभांचकार। कुषुभ्यितः। कुषुभितः। कुषुभ्यित्वा। कुषुभित्वा। कुषुभ्यितुम्। कुषुभितुम्। १९। संभूयस प्रभूतार्थे। संभूयस्यति शस्यम्; वर्षति देवे प्रभूतं भवतीत्यर्थः। असंभूयसीत्। संभूयियसिषति। संभूयस्यित्वा। संभूयसित्वा। २०। इयसेससौ तु धातू ईर्ष्यार्थौ। इयस्यति। इसस्यति। २२। पुष्प सन्तोषे। पुष्पति। २३॥ ५॥

**उषस प्रभातवाच्ये रेषा चित्रेऽथ पयसिति प्रसवे।**
**वेला समयार्थे स्याच्चरण गतावगद तन्त्रार्थः॥ ६॥**

उषस प्रभातवाच्ये; प्रभातार्थे इत्यर्थः। उषस्यति रात्रिः; प्रभातीभवतीत्यर्थः। रेषा चित्रे। रेषायति; चित्रं करोतीत्यर्थः। २५। पयसिति प्रसवे। पयस् इति धातुः प्रसवे, उत्पत्तौ। पयस्यति गौः। पयः प्रसूते इत्यर्थः। वेला समयार्थे। वेलायति चैत्रः; कालविलम्बं करोतीत्यर्थः। २७। चरण गतौ। चरण्यति; गच्छतीत्यर्थः। २८। अगद तन्त्रार्थः। तन्त्रमौषधं तस्यार्थे। अगद्यति; औषधं करोतीत्यर्थः। २९॥ ६॥

**तिरस तरण प्रसिद्धौ दुवस तु परितापपरिचरणयोः स्यात्।**
**कुसुभ क्षेपेऽथैला केला खेला विलासार्थाः॥ ७॥**

तिरस तरण प्रसिद्धौ। तिरस तरण एतौ द्वौ प्रसिद्ध्यर्थे। तिरस्यति। तरण्यति; प्रसिद्धो भवतीत्यर्थः। ३१। दुवस् तु परितापपरिचरणयोः। दुवस्यति। ३२। कुसुभ क्षेपे। कुसुभ्यति; क्षिपतीत्यर्थः। स्वदेहाश्रयां परकर्तृकां निरोधक्रियामनुभवतीत्यर्थ इत्यन्ये। ३३। एला केला खेला

विलासार्थाः । एलायति, केलायति, खेलायति च; विलसतीत्यर्थः । एलायियिषति । ङे, ऐलायियत् । एलायांचकार। केलायियिषति । अकेलायियत् । केलायांचकार । केलायित्वा । प्रकेलाय्य इत्यादि। ३६॥७॥

मेधा आशुग्रहणे मगध तु परिवेष्टने समर युद्धे ।
सुख दुःख तत्क्रियायां विख्यातौ भुरण पुरण गतौ ॥ ८ ॥

मेधा आशुग्रहणे। मेधायति। ३७। मगध तु परिवेष्टने। मगध्यति। मगध्यिता । मगधकः । ३८ । समर युद्धे । समर्यति; युद्धं करोति।३९। सुख दुःख तत्क्रियायाम्। सुख्यति; सुखीभवतीत्यर्थः ।४० । दुःख्यति; दुःखीभवतीत्यर्थः । ४१ । भुरण पुरण गतौ । भुरण्यति । पुरण्यति । ४२ ॥ ८ ॥

भरण तु धारणपोषणयुद्धेष्वथ चुरण चौर्यचेतनयोः ।
इषध शरधारणार्थे तन्तस पम्पस तु दुःखार्थौ ॥ ९ ॥

भरण धारणपोषणयुद्धेषु। भरण्यति ।४४। चुरण चौर्यचेतनयोः। चुरण्यति । ४५। इषध शरधारणार्थ । इषध्यति । इषधिता। इषदिधिषति। ४६। तन्तस पम्पस तु दुःखार्थौ । तन्तस्यति। पम्पस्यति ।तन्तसांचकार । पम्पसांचकार । "योऽशिति"॥४।३।८०॥ इति यलोपः । ४७ ॥ ९ ॥

गद्गद वाक्यस्खलने त्वरार्थकस्तुरण सपर पूजायाम् ।
पञ्चाशदमी कण्ड्वादयः परेऽनर्थका नोक्ताः ॥ १० ॥

गद्गद वाक्यस्खलने। गद्गद्यति। गद्गदङ् इत्येके। तन्मते गद्-

गद्यते ।४८। त्वरार्थकस्तुरण । तुरण्यति; त्वरते इत्यर्थः । सपर पूजायाम् । सपर्यति । "शंसिप्रत्ययात्"॥५।३।१०५॥ इत्यङि; सपर्या । एते पञ्चाशत् कण्ड्वादयो धातव उक्ताः ॥ परेऽन्ये उरण गोधादयः केचित् कण्ड्वादयोऽनर्थका नोक्ताः; अनुक्तार्थत्वान्न कथिता इत्यर्थः ॥ १० ॥

क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः प्रदर्शितः ।
प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः ॥ ११ ॥

अपरसौत्रधातूनन्यथाधातूंश्चातिदिशन्नाह :—

परे स्तम्भादयः सौत्रा गव्याद्या नामधातवः ।
चुलुम्पप्रमुखा वाक्यकरणीया अनेकशः ॥ १२ ॥
लौकिकाः कविमुख्याश्च परोक्ता अपि केचन ।
अनेकार्थाः स्मृतास्तेषां दर्शनं तु निदर्शनम् ॥१३॥ युग्मम् ।

परे स्तम्भादयः सौत्राः । कण्ड्वादिभ्यः परेऽन्ये सौत्रा धातवः स्तम्भ्वादयः । स्तम्भू स्तम्भे । स्तम्भः क्रिया निरोधः । स्तभ्नाति, स्तभ्नोति; "स्तम्भूस्तुम्भूस्कम्भूस्कुम्भूस्कोः श्ना च"॥३।४।७८॥ इति श्नाश्नू । "नोव्यञ्जन-"॥४।२।४५॥ इति नलुक् । ऊदित्त्वात् क्त्वि वेट् । स्तब्ध्वा । स्तम्भित्वा । तन्द्रा आलस्ये । तन्द्राति । तन्द्रालुः । कि ज्ञाने । कयति । उणादौ "जनिपणि-"(उणा-१४०) इति टे दीर्घे च; कीटः । "किशृ-"(उणा-४३४) इति करे, केकरो वक्रदृग् । "तिनिश्-"॥ (उणा-५३७) इति शे निपातनात्, कीशो मर्कटः । पति पतने । पतयति,

पतयालुरिति वाऽनेन पतण् गतौ वेति चुराद्यदन्तेन चेत्युभाभ्यामपि स्यात् ॥ इत्यादयः सौत्राः ॥

इह वर्णक्रमप्रतिज्ञानेऽपि स्तम्भ्वादयः सौत्रा इति वृद्धोक्तेर्भकारान्तोऽपि स्तम्भू धुरि पेठे। एवं लौकिकेषु कुविर्वाक्यकरणीयेषु चुलुम्प आदौ पेठे, तत्राप्ययमेव हेतुर्मन्तव्यः। गव्याद्या नामधातवः। गोशब्दात् क्यन्प्रत्यये गव्य इति। यथा गामिच्छति गव्यति। नावमिच्छति नाव्यति। १। एवं काम्य २ क्विप् ३ क्यङ् ४ च्व्यर्थक्यङ् ५ क्यङ्ष् ६ कष्टादेः क्यङ् ७ तपसः क्यन् ८ णिङ् ९ णिच् १० एतत्प्रत्ययान्ताः शब्दा नामधातवो भवन्ति। क्रमेणोदाहरणानि। यथा पुत्रमिच्छति पुत्रकाम्यति। "द्वितीयायाः काम्यः"॥३।४।२२॥ इति काम्यप्रत्ययः। १। गामिच्छति गव्यति "अमाव्ययात् क्यन्-" ॥३।४।२३॥ इति क्यन्प्रत्यय इत्युक्तमेव। २। पुत्र इवाचरति पुत्रति; "कर्तुः क्विप्-"॥३।४।२५॥ इति क्विप्। ३। हंस इवाचरति हंसायते; "क्यङ्-"॥३।४।२६॥ इति आधारे क्यङ्। ४। अभृशो भृशो भवति भृशायते; "च्व्यर्थे भृशादेः"॥५।३।१४०॥ इति क्यङ्। ५। अलोहितो लोहितो भवति लोहितायते, लोहितायति; "डाच् लोहितादिभ्यः-"॥३।४।३०॥ इति क्यङ्ष्। "क्यङ्षो नवा"॥३।३।४३॥ इति विकल्पेनात्मनेपदम्। ६। कष्टाय क्रमणे, क्रामति प्रवर्त्तते कष्टायते; "कष्टकक्षकृच्छ्रसत्र-"॥३।४।३१॥ इति क्यङ्। ७। तपः करोति तपस्यति यती; अत्र व्रतार्थस्तपः शब्दः। तपस्यति शत्रून्; अत्र सन्तापार्थस्तपः शब्दः। ८। हस्तौ निरस्यति हस्तयते। पादौ निरस्यति पादयते। "अङ्गान्निरसने-"॥३।४।३८॥ इति णिङ्। ९। मुण्डं करोति

मुण्डयति च्छात्रम् । घटं करोति, घटयति । "णिज् बहुलं नाम्नः-"॥३। ४।४२॥ इति णिज् । व्याकरणस्य सूत्रं करोति, व्याकरणं सूत्रयति । प्रत्यये समुत्पन्ने व्याकरणसूत्रयोः संबन्धो निवर्त्तते । सूत्रयतिक्रिया-संबन्धात्तु द्वितीयैव, नतु षष्ठी । एवं त्रिलोकीं तिलकयति इत्यादि ।१०। एवं दशप्रत्ययान्ताः शब्दा नामधातवो भवन्ति ।

नामधातुविशेषविस्तरस्तु श्रीगुणरत्नसूरीन्द्रविरचितक्रियारत्नसमुच्चय-ग्रन्थादवसातव्यः ।

चुलुम्पप्रमुखा धातवो वाक्यकरणीयसंज्ञा भवन्ति । चुलुम्प छेदने । चुलुम्पति । लक्ष्यं यथा--

"नीपानं दोलयन्नेष प्रेङ्खोलयति मे मनः ।
पवनो वीजयन्नाशा ममाशामुच्चुलुम्पति"॥१॥

कूच उद्भेदे "नाम्नि पुंसि च"॥५।३।१२१॥ इति णके, कूचिका चित्रकरलेखनी कूचिका च । धटण् बन्धने । निर्धाटयति । णके, धाटकः । णिचोऽनित्यत्वेऽचि धटस्तुला । उल्लुडण् उट्टीकने । अदन्तः । माघे लक्ष्यं यथा । "तावत् खरः प्रखरमुल्लुडयांचकार" । अत्राल्लुकः स्थानित्वादुपान्त्यगुणाभावः । अवधीरण् अवज्ञायाम् । "तत्र धर्म-मवधीरय धीर" इति लक्ष्यं नैषधे । उद्धुषत् उल्लकस् उच्छ्वसने । आद्यः कुटादिः । उद्धुषत्युल्लकसत्यङ्गमनेन । उद्धुषणमुल्लकसनं रोमाञ्चः । उद्धुषेः "कुटादेः-"॥४।३।१७॥ इत्यनटो ङित्त्वान्न गुणः ।११।

क्लविमुख्या धातवो लौकिकसंज्ञा भवन्ति । यथा । क्लवि वैक्लव्ये । विक्लवते । अचि, विक्लवः । लक्ष्यं यथा । "मिलन्त्याशासु जीमूता विक्लवन्ते दिवि ग्रहाः" । विच्छायीभवन्तीत्यर्थः । वीजण व्यजने । वीजयति ।

अवीजयत् । "राजहंसैरवीज्यत" । ङे अदन्तत्वेन "अतः"॥४।३।८२॥ इत्यल्लुकि समानलोपित्वात् "उपान्त्यस्य-"॥४।२।३५॥ इत्यनेनोपान्त्यह्रस्वाभावे; अविवीजत्। विपूर्वस्य ईजि कुत्सने चेत्यस्य तु णौ; व्यैजयत्, व्यैज्यत, व्यैजिजत् इत्यादि स्यात् । हीलण निन्दायाम् । हीलयति । ङेः प्राग्वदुपान्त्यह्रस्वाभावे; अजिहीलत्। क्ते, हीलितः। "णिवेत्ति-"॥५। ३।१११॥ इत्यने, हीलना । णिचोऽनित्यत्वे, हीला; "क्तेटः-"॥५।३। १०६॥ इत्यः । अन्दोलण् हिन्दोलण् प्रेङ्खोलण् दोलने । दोलनमुत्क्षेपः । अन्दोलयति । ङे, "स्वरादेर्द्वितीयः"॥४।१।४॥ इति द्वितीयांशस्य द्वित्वे, तत्रापि "न बदनम्-"॥४।१।५॥ इति नस्य द्वित्वनिषेधे, अदन्तत्वात् "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वाभावे च; आन्दुदोलत् । हिन्दोलण् । हिन्दोलयति । ङे, अजिहिन्दोलत् । प्रेङ्खोलण् । प्रेङ्खोलयति । ङे, अपिप्रेङ्खोलत् । रूषण् रूक्षणव्याप्त्योः । रूषयति अटन् । रूषयति भुवम् । पृषोदरादित्वादाटरूषकः । ङे, अरुरूषत् । लक्ष्यं यथा । "करीव सोऽन्तर्गिरिरेणुरूषितः" । इत्यादयो लौकिका ज्ञेयाः । इह च केचित् लौकिका अपि वाक्यकरणीयेषूक्ता दृश्यन्ते वाक्यकरणीयाश्च लौकिकेषु केचिद्दृश्यन्ते; तेनैते लौकिका एते च वाक्यकरणीया इति दृढो विवेक एतत्संज्ञाऽन्वर्थश्च विशेषसंप्रदायविद्भ्योऽभ्यूह्या इति ॥

केचन परमतोक्ता धातवो यथा । खचण् बन्धने । यथा । "तडित् खचयतीवाशाः" । "आसने रत्नखचिते" । अदन्तत्वेन "अतः"॥४।३। ८२॥ इत्यल्लुकः स्थानित्वेन, अत उपान्त्यत्वाभावात् उपान्त्यस्योक्ता वृद्धिर्न । ङे, अचखचत् । अत्रादन्तत्वात् "अतः"॥४।३।८२॥ इत्यल्लुकि, समानलोपित्वात् "असमानलोप-"॥४।१।६३॥ इति पूर्वस्य सन्वद्भावो

दीर्घश्च न । ओजण् बलतेजसोः । ओजयति । सनि "स्वरादेः-"॥४।१।४॥ इति जेर्द्वित्वे, ओजिजयिषति । ङे, औजिजत् । ननु अल्लुकः स्थानिवत्वाज्ज इति द्वित्वं प्राप्नोति, तत्कथं जेर्द्वित्वम् । उच्यते । "अतः" ॥४।३।८२॥ इति सूत्रस्य वृत्तौ णिविषयेऽल्लुक् स्यादित्यपि व्याख्याऽस्ति; तदाश्रयणेऽल्लुकोऽत्र णौ विषये कृतत्वेन परनिमित्तकत्वाभावात् "स्वरस्य परे-"॥७।४।११०॥ इत्यनेन च परनिमित्तकस्यैव स्वरादेशस्य स्थानित्वविधानान्न स्थानित्वमित्यतो जि इत्येव द्वित्वम् । मा भवानोजिजत्; अत्रादन्तत्वेन समानलोपित्वात् द्वित्वात् पूर्वं प्राप्त उपान्त्यह्रस्वो न । अचि, ओजं विषमसंख्या । उणादौ "अस्"(उणा–९५२) इत्यसि, ओजः । स्फुटण् प्राकट्ये । स्फुटयति । अल्लुकः स्थानित्वाद् गुणो न । तुत्थण् आच्छादने। तुत्थयति। यथा माघे। "पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः" इति । स्कन्धण् समाहारे। स्कन्धयति ।स्फुटं करोति स्फुटयत्यर्थमित्यादिरीत्या स्फुटादेर्नाम्नो णिजि; स्फुटयति, तुत्थयति, स्कन्धयतीत्यादि रूपसिद्धावपि स्फुटण्प्रभृतीनामदन्तेषु पाठ इष्टार्थप्रत्यये सति णिजं विनाऽपि प्रयोगार्थः । अदन्तत्वाच्चैषामनेकस्वरकार्याण्यपि स्युः । तथाहि । णिचो नित्यत्वाभावेऽप्यनेकस्वरादेः "व्यञ्जनादेरेकस्वरात्-" ॥३।४।९॥ इति यङ् न स्यात् । ननु कथमेतत् । णिच्सन्नियोग एव चुरादीनामदन्ततेति हि न्यायः। सत्यम्। परं न्यायाः स्थविरयष्टिप्राया इत्यतो णिच्सन्नियोग इत्ययं न्यायोऽत्र नाश्रीयते। तथाऽनेकस्वरत्वात् "धातोरनेकस्वरात्-"॥३।४।४६॥ इति परोक्षाया आमि, स्फुटांचकारेत्यादि; शीलाद्यर्थे "निन्दहिंस-"॥५।२।६८॥ इति णके, स्फुटक इत्यादि च । अपि च । एवंप्रकाराणां धातूनामतो लुकं बाधित्वाऽनुपान्त्यस्याप्यकारस्यो-

त्पलमतीयेनातोऽिणतीति सूत्रेण वृद्धौ, "अर्त्तिरी-"॥४।२।२१॥ इति प्वागमे, स्फुटापयतीत्याद्यपि स्यात्।

अनेकार्थाः सर्वे धातवो ज्ञेयाः; तेषामर्थानां दर्शनं प्रकटनं तु निदर्शनं दृष्टान्तमात्रमेवेति ॥१३॥

ज्ञेयाः स्वयं यथादृष्टमत्र न्यूनाधिकं च यत्।
तुल्यचित्तैः सुधीभिस्तच्छोध्यं मयि कृपालुभिः ॥ १४ ॥

द्वात्रिंशदधिकधातुद्विसहस्रीपत्रपूरितः श्रयताम्।
कविकल्पतरुर्भूयादेकादशपल्लवः फलदः ॥ १५ ॥

द्वात्रिंशदधिकधातुद्विसहस्री सैव पत्राणि तैः पूरितो भृतः कविकल्पतरुग्रन्थः श्रयतां नराणां फलदो भूयात्। कल्पतरुधर्मत्वात्पत्रत्वारोपः, फलदत्वं च युक्तमुक्तम् ॥ १५ ॥

इति सद्गुरुवाग्देवीप्रसादमासाद्य हर्षकुलविहिते।
कविकल्पद्रुमनाम्नि ग्रन्थेऽभूत्पल्लवोऽत्र दशमपरः ॥१६॥

सुगमः। किन्तु दशमपर इति। दशमात्परोऽग्रेतनो दशमपर एकादश इत्यर्थः ॥ १६ ॥

तत्संपूर्त्तौ च संपूर्णोऽयमेकादशपल्लवी ग्रन्थः।
कविकल्पद्रुमनामा यथेप्सितफलदः पाठकानाम् ॥

इति तपागच्छाधिपतिश्रीलक्ष्मीसागरसूरिश्रीसुमतिसाधुसूरिपट्टप्राप्तप्रतिष्ठश्रीहेमविमलसूरिशिष्यहर्षकुलप्रणीतायां स्वोपज्ञहैमकविकल्पद्रुमधातुपाठटीकायां धातुचिन्तामणिनाम्न्यां सौत्रधातुप्रकाशोनामैकादशः पल्लवः संपूर्णः।

॥ तत्संपूर्त्तये संपूर्णेयं कविकल्पद्रुमटीका ॥

श्रीजैनयशोविजयग्रन्थमाला (१)

॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालो-कालङ्कारः ।

श्रीकाशीस्थ न्यायविशारद महामहोपाध्याय
श्रीयशोविजय नामाङ्कित श्वेताम्बर जैन
संस्कृत पाठशालातः प्रादुर्भूतः

काश्यां

चन्द्रप्रभायन्त्रागारे मुद्रितश्च
वीर सं० २४३० सन् १९०४

पायं पायं प्रवचनसुधां पीयते या प्रकामं
स्वैरं स्वैरं चरति कृतिनां कीर्तिवल्लीवनेषु
दोग्ध्री कामाननवरसैः सा भृशं प्रीणयन्ती
मादृग् वत्सान् जयति जगति श्रीगवीदेवसूरेः

"श्रीरत्नप्रभाचार्यः"

अर्हम्

# प्रस्तावना ।

———:o:———

अथास्यां संसृतिसरण्यां समागत्य सर्वे शरीरिणः शान्तिशकलमप्यनासादयन्तः समयसरीसृपशीर्णाः संसारापारपारावारपारमुपसर्तुमपारयन्तः परमपारमार्थिकपदमपि पुण्यपद्यया प्राप्तुमपारमार्थिकं मन्वानाः क्षोदिष्ठप्रज्ञया सर्वाऽवज्ञया च पाञ्चभौतिकपिण्डप्रेष्ठाः कलिकल्मषकालिमकलङ्कद्राघिष्ठा विषमविषविषयाशीविषदष्टविशीर्णविषस्फेष्ठाः किंवा विषकीटा इव विषयविषभुजो ऽनादिदुर्वासनावासितवुद्धयश्चाहमहमिकामेव परमपुरुषार्थं साधिष्ठमाकलयन्तोवलिताश्च गरिष्ठाहोपुरुषिकया प्रत्यहं पितृवने दीर्घनिद्रासुखमनुभवन्तः क्रियासमभिहारेण ह्रसिष्ठजननीजठरे वसन्तः सांसारिकानेकवंहिष्ठकटुक्लेशपाशिताः सुप्तप्रवुद्धा इव प्रवुद्धसुप्ता इव तिष्ठन्ति ।

तदत्र किं कारणं कोहेतुः किं प्रयोजनं कस्मादित्थमिति साम्रेडितप्रश्नावसरे सर्वमेतदविद्याविलाससाम्राज्येनेति वारं वारं वयमुत्तरयामः ।

हंहो त्रिलक्षणशेमुषीका विचक्षणाः ! शुभवन्तोभवन्तः सहृदयहृदयसन्तोषप्रदन्तोषितरसज्ञ रसज्ञा रस ज्ञापितं कर्ण्य-तांवहत्किमपि श्वःश्रेयसमिदमाकर्ण्य नीरक्षीरविवेचनाविलक्ष-णचेतनाचातुरीचमत्कारचमत्कृताः सकृदप्योमिति ब्रूयुः ।

अविद्यानिरासार्थमेव प्रयतमानैरस्माभिः श्रीजैनयशोविजय-ग्रन्थमाला ऽनर्घ्यमणिगणगुम्फिता हारभूतेव भवतां श्रीमता-मुपहारीयते ।

तस्यामेकेयं मणीरामायिता प्रमाणनयतत्वालोकालङ्कार-रूपा सर्वोपरि सुमेरुभूतेव विलसति ।

अमुं ग्रन्थं श्री १०८ सुगृहीतनाम्नोवादिप्रवरदेवसूरेर्मु-खाम्भोजनिर्गलितामृतधाराऽऽसारमिव प्रमाणनयतत्वालोका-लङ्कारमदृष्टपूर्वं जैनमतमन्तव्यप्रमाणविचारकरं दुर्वादिवाद-वासनानिर्यातनपरं विलक्षणभङ्गीकं सप्तभङ्गीतरङ्गरिङ्गितं निबन्धं निरीक्ष्य किमिदं कथमिदं कस्येदं कीदृक्षमिदमिति स्वभावेनैव जिज्ञासवः संपत्स्यन्ते तत्त्वग्रहाग्रहग्रहिलाः शास्त्र-प्रियाप्रिया स्तदत्रावश्यकं किञ्चनोपन्यस्तुम् ।

तत्र प्रथममवधेयं धीमद्धौरेयैस्तत्रभवद्भिः, यत्कस्यापि मतस्य तत्त्वमनाकलय्य खण्डनमण्डनबद्धपरिकरा ये यथा-

जाताः सलभा इव परिपतन्ति ते लभन्ते न स्वात्मविनाशादृते किञ्चिदपि भावुकम् ।

श्रीवादिदेवसूरिभगवतोऽन्तेवासी श्रीरत्नप्रभसूरिर्वसुलोकार्क १२३८ मिते विक्रमाब्दे निजानिर्मितोपदेशमालाटीकायामेवं व्यलेखीत् ।

**शिष्यः श्रीमुनिचन्द्रसूरिमुनिभिर्गीतार्थचूडामणिः**
**पट्टे स्वे विनिवेशितस्तदनु स श्रीदेवसूरिप्रभुः ।**
**अस्थाने जयसिंहदेवनृपतेर्येनास्तदिग्वाससा**
**स्त्रीनिर्याणसमर्थनेन विजयस्तम्भः समुत्तम्भितः ॥**

**तत्पट्टप्रभवोभवन्नथ गुणग्रामाभिरामोदयाः**
**श्रीभद्रेश्वरसूरयः शुचिधियस्तन्मानसप्रीतये ।**
**श्रीरत्नप्रभसूरिभिः शुभकृते श्रीदेवसूरिप्रभोः**
**शिष्यैः सेयमकारि संमदकृते वृत्तिर्विशेषार्थिनाम् ॥**

**तथा च ।**

**विक्रमाद् वसुलोकार्क १२३८ वर्षे माघे समर्थिता**
**एकादशसहस्राणि मानं सार्धं शतं तथा ॥११५०**

अस्माद् श्रीरत्नप्रभसूरेः समयः स्फुटमेवावभाति—

किञ्च किञ्चिन्न्यूनाधिकः सएव समयस्तदीयगुरोर्देव सूरेरपि चास्मादेवानिर्णेतुं शक्यस्तथापि दुर्वद्धं सुवद्धामिति न्यायेन पुनः प्रमाणान्तरं प्रदर्श्यते ।

श्रीमुनिसुन्दरसूरिणा रसर्तुमनुमिते १४६६ ऽब्दे *गुर्वावल्यामेवं व्यलेखि ।

अष्टहयेशमितेब्दे ११७८ विक्रमकालाद्दिवं गतोभगवान् ।
श्रीमुनिचन्द्रमुनीन्द्रोददातु भद्राणि संघाय ॥ ७१ ॥

तस्मादभूदजितदेवगुरुर्गरीयान्
प्राच्यस्तपः श्रुतिनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो
वादीश्वरोस्तगुणचन्द्रमदोपि वाल्ये ॥ ७२ ॥

येनार्दितश्चतुरसीतिसुवादिलीला-
लब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः
श्रीसिद्धभूमिपतिसंसादि पत्तनेऽस्मिन् ॥ ७३ ॥

वेदमुनीशमिते ११७४ऽब्दे देवगुरुर्जगदनुत्तरोभ्युदितः ।
श्रीमुनिचन्द्रगुरोरिति शिष्या वहवोभवन् विदिताः ७४॥

* रसरसमनुमितवर्षे १४६६ मुनिसुन्दरसूरिणाकृतापूर्वम् ।
मध्यस्थै रवधार्या गुर्वावलीयं जयश्रीद्धा ॥ ८६ ॥

अस्माद्पि स्फुटतरःसमयोदीपवद्देदीप्यते ।

श्रीपूज्यपाददेवसूरिरेव प्रमाणनयतत्वालोकालङ्कारस्य रत्नाकरनाम्नीं महाव्याख्यां रचितवान् ।

तद् विषयेपि गुर्वावल्यां लिखितमस्ति—

**स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां नहि देवसूरिः।**
**यतश्चतुर्विंशतिसूरिशाखं यस्यैव नाम्ना विदितं बभूव ७४**

देवसूरिशिष्यैः श्रीरत्नप्रभसूरिभिर्नातिलघीयसी रत्नाकरावतारिका नाम्नी टीका विनिर्मितास्ति। या मूलटिप्पणपञ्जिकाभिः साहिता मुद्रणालये मुद्रयितुमारब्धा तस्यामेवं लिलेख श्रीरत्नप्रभः ।

**यैरत्र स्वप्रभया दिगम्बरस्यार्पिता परा भूतिः।**
**प्रत्यक्षं विबुधानां जयन्तु ते देवसूरयोनव्याः॥ ३ ॥**

श्रीमल्लधारिराजशेखरसूरिणा पञ्जिकाकारेणापि लिखितमस्ति।

**स्याद्वादरत्नाकर इत्यस्ति ग्रन्थोमहत्तमः ।**
**वादिवृन्दारकश्रीमद्देवसूरिविनिर्मितः ॥ ४ ॥**

न्यायशास्त्रस्यायमद्वितीयोग्रन्थः

## अत्राष्टौ परिच्छेदाः सन्ति ।

तत्र प्रथमपरिच्छेदे–प्रमाणस्वरूपनिर्णयः ।

द्वितीये परिच्छेदे–प्रत्यक्षस्वरूपनिर्णयः ।

तृतीयपरिच्छेदे–स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयः

चतुर्थपरिच्छेदे–आगमाख्यप्रमाणस्वरूपनिर्णयः ।

पञ्चमपरिच्छेदे–विषयस्वरूपनिर्णयः ।

षष्ठपरिच्छेदे–फलप्रमाणस्वरूपाद्याभासनिर्णयः ।

सप्तमपरिच्छेदे–नयात्मस्वरूपनिर्णयः ।

अष्टमपरिच्छेदे–वादिप्रवादिन्यायानिर्णयः ।

एतद्ग्रन्थमुद्रणावसरे पञ्चषाणि पुस्तकानि प्राप्तानि, तेषांमध्ये

१ श्री महामान्यधन्यतम धर्मविजयमुनीन्द्रतो लब्ध-मेकं पुस्तकम् ।

२ श्री मुनिराज वीरविजयेन दत्तमेकं पुस्तकम् ।

३ श्रीमुनिना अमिविजयेन महाशयेनापिपुस्तकमेकं समर्पितम् ।

४ श्रीकेशरविजयमुनितोपि पुस्तकमेकं समासादितम् ।

५ भावनगरस्थश्राद्धवर्य्य कुंवरजी आनन्दजी इत्यनेन श्रावकेनात्र महती सहायता दत्ता ।

६ श्रीपं. अम्बादत्तशास्त्रिणां समीपेपुस्तमेकमाप्तम् ।

पूर्वोक्तमहाशयानां भूयांसं परिश्रमं चोपकृतिं च तेषां सप्रश्रयमङ्गीकरोतीयं पाठशाला ।

यद्यपि पूर्वोक्तानि पुस्तकानि दृष्ट्वा शोधितोयं ग्रन्थस्तथापि मनुष्यसहभूर्भ्रान्तिर्दुर्वारा तदत्र दृष्टिदोषात् शीशकाक्षरयोजनदोषाद् वा या काचना ऽशुद्धिर्भवेत् तत्स्वपुस्तके परिमृज्य कृपया पाठशालामपि सूचयेयुः सज्जनाः

**इतिप्रार्थयते**

**काशीस्थजैनयशोविजयसंस्कृतपाठशाला ।**



॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालो-कालङ्कारः ।

## प्रथमः परिच्छेदः ।

रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।
शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये॥ १॥

प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते १॥

स्वपरव्यवसायिज्ञानं प्रमाणम् ॥ २ ॥

अभिमतानभिमतवस्तुस्वीकारातिरस्कार-क्षमं हि प्रमाणमतोज्ञानमेवेदम् ॥ ३ ॥

नवै सान्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नंत-

स्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतम-
त्वानुपपत्तेः ॥ ४ ॥

नखल्वस्य स्वनिर्णीतौ करणत्वं स्तंभादेरि-
वाचेतनत्वात् नाप्यर्थनिश्चितौ स्वनिश्चि-
तावकरणस्य कुंभादेरिवतत्राप्यकरणत्वात् ५॥

तद्व्यवसायस्वभावं समारोपपरिपन्थित्वात्-
प्रमाणत्वाद्वा ॥ ६ ॥

अतस्मिँस्तदध्यवसायः समारोपः ॥ ७ ॥

सविपर्ययसंशयानध्यवसायभेदात्रेधा ॥८॥

विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥ ९ ॥

यथा शुक्तिकायामिदं रजतमिति ॥१०॥

साधकबाधकप्रमाणाभावादनवस्थिता-
नेककोटिसंस्पर्शिज्ञानं संशयः ॥ ११ ॥

यथाऽयं स्थाणुर्वा पुरुषोवेति ॥ १२ ॥

किमित्यालोचनमात्रमनध्यवसायः ॥१३॥

यथागच्छतस्तृणस्पर्शज्ञानम् ॥ १४॥

ज्ञानादन्योऽर्थः परः ॥ १५ ॥

स्वस्य व्यवसायःस्वाभिमुख्येन प्रकाशनं बाह्यस्येवतदाभिमुख्येन करिकलभकमहमात्मनाजानामीति ॥ १६ ॥

कः खलुज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपितत्प्रकारं नाभिमन्येत मिहिरालोकवत् ॥ १७ ॥

ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम् १८॥

तदितरत्त्वप्रामाण्यम् ॥ १९ ॥

तदुभयमुत्पत्तौ परतएव ज्ञप्तौ तु स्वतः परतश्चेति ॥ २० ॥

श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

## अथ द्वितीयः परिच्छेदः

तद्द्विभेदं प्रत्यक्षं च परोक्षं च ॥ १ ॥

स्पष्टं प्रत्यक्षम् ॥ २ ॥

अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥ ३ ॥

तद्द्विप्रकारं सांव्यवहारिकं पारमार्थिकं च॥४॥

तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥ ५ ॥

एतद्द्वितयमवग्रहेहावायधारणाभेदादेकश[1]श्चतुर्विकल्पकम् ॥ ६ ॥

विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः ॥ ७ ॥

अवगृहीतार्थविशेषाकाङ्क्षणमीहा ॥ ८ ॥

---

१ "एकैकश" इत्यपिपाठान्तरम् ।

ईहितविशेषनिर्णयोऽवायः ॥ ९ ॥

स एव दृढतमावस्थापन्नो धारणा ॥ १० ॥

संशयपूर्वकत्वादीहायाः संशयाद्भेदः ॥ ११ ॥

कथञ्चिदभेदेऽपि परिणामविशेषादेषां व्यपदेशभेदः ॥ १२ ॥

असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतयाऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥ १३ ॥

क्रमोऽप्यमीषामयमेव तथैव संवेदनात् ॥ १४ ॥

एवंक्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्च ॥ १५ ॥

अन्यथाप्रमेयानवगतिप्रसङ्गः ॥ १६ ॥

तथाहि नखल्वदृष्टमवगृह्यते नचानवगृहीतं-

सन्दिह्यते नचासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेतं धार्यते ॥ १७॥

क्वचित् क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १८॥

पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् १९॥

तद्विकलं सकलं च ॥ २० ॥

तत्र विकलमवधिमनःपर्यायज्ञानरूपतया-द्वेधा ॥ २१ ॥

अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम्॥२२॥

संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् ॥ २३ ॥

सकलंतुसामग्रीविशेषतः समुद्भूतसमस्ताव-

रणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारि-
स्वरूपं केवलज्ञानम् ॥२४॥

तद्वानर्हन्निर्दोषत्वात् ॥२५॥

निर्दोषोसौ प्रमाणाविरोधिवाक्त्वात्॥२६॥

तदिष्टस्यप्रमाणेनाबाध्यमानत्वात् तद्वा-
चस्तेनाविरोधसिद्धिः ॥२७॥

नच कवलाहारवत्त्वेन तस्यासर्वज्ञत्वं कवला-
हारसर्वज्ञत्वयोरविरोधात् ॥२८॥

इतिप्रत्यक्षस्वरूपनिर्णयोनाम द्वितीयः
परिच्छेदः ॥ २ ॥

## अथ तृतीयः परिच्छेदः

अस्पष्टं परोक्षंस्मरणप्रत्यभिज्ञानतर्कानुमा-
नागमभेदतस्तत्पञ्चप्रकारं तत्रसंस्कारप्र-

बोधसंभूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम् ॥ १ ॥

तत्तीर्थकरबिम्बमिति यथा ॥ २ ॥

अनुभवस्मृतिहेतुकं तिर्यगूर्द्धतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम् ३

यथा तज्जातीयएवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि ॥ ४ ॥

उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन् सत्येवभवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ॥ ५ ॥

यथा यावान् कश्चित्धूमःस सर्वोवह्नौसत्येवभवतीति तस्मिन्नसत्यसौ नभवत्यैवेति ६॥

अनुमानं द्विप्रकारं स्वार्थं परार्थं च ॥७॥

तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थम् ॥ ८ ॥

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ९ ॥

नतु त्रिलक्षणकादिः ॥ १० ॥

तस्य हेत्वाभासस्यापि सम्भवात् ॥ ११ ॥

अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १२ ॥

शङ्कितविपरीतानध्यवसितवस्तूनां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥ १३ ॥

प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यतामित्यनिराकृतग्रहणम् ॥ १४ ॥

अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानम् ॥ १५ ॥

व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्यथा तदनुपपत्तेः ॥ १६ ॥

नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥ १७॥

आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धोधर्म्मी ॥१८॥

धर्म्मिणः प्रसिद्धिः क्वचिद्विकल्पतः कुत्रचित्प्रमाणतःक्वापि विकल्पप्रमाणाभ्याम् १९

यथा समस्तिसमस्तवस्तुवेदी क्षितिधरकन्धरेयं धूमध्वजवती ध्वनिः परिणतिमानिति२०॥

पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ॥२१॥

साध्यस्य प्रतिनियतधर्म्मिसंबन्धिता प्रसिद्धये हेतोरुपसंहारवचनवत्पक्षप्रयोगोप्यवश्यमाश्रयितव्यः ॥२२॥

त्रिविधं साधनमभिधायैव तत्समर्थनं विद-

धानः कः खलु न पक्षप्रयोगमङ्गीकुरुते ॥ २३ ॥

प्रत्यक्षपरिच्छिन्नार्थाभिधायिवचनं परार्थं प्रत्यक्षं परप्रत्यक्षहेतुत्वात् ॥ २४ ॥

यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति २५ ॥

पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनम् ॥ २६ ॥

हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः ॥ २७ ॥

सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः । असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः २८

यथा कृशानुमानयंपाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति २९

अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वि-
तीयप्रयोगस्यैकत्रानुपयोगः ॥ ३० ॥

न दृष्टान्तवचनं परप्रतिपत्तये प्रभवति त-
स्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ३१

न च हेतोरन्यथानुपपत्तिनिर्णीतये यथोक्तत-
र्कप्रमाणादेव तदुपपत्तेः ॥ ३२ ॥

नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन
व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षा-
यामनवस्थितेर्दुर्निवारः समवतारः ॥ ३३ ॥

नाप्यविनाभावस्मृतये प्रतिपन्नप्रतिबन्धस्य
व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः

अन्तर्व्याप्त्या हेतोःसाध्यप्रत्यायने शक्तावश
क्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥ ३५ ॥

पक्षीकृतएवविषये साधनस्य साध्येन व्याप्ति-

रन्तर्व्याप्तिरन्यत्र तु बहिर्व्याप्तिः यथाऽनेका-
न्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः । अग्नि-
मानयं देशो धूमवत्त्वात् य एवं स एवं
यथा पाकस्थानम् ॥ ३६ ॥

नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं
पक्षहेतुप्रयोगादेव तस्याः सद्भावात् ॥३७॥

समर्थनमेव परं परप्रतिपत्त्यङ्गमास्तां तदन्तरेण
दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥३८॥

मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनि-
गमनान्यपि प्रयोज्यानि ॥३९॥

प्रतिबन्धप्रतिपत्तेरास्पदं दृष्टान्तः ॥४०॥

स द्वेधा साधर्म्यतो वैधर्म्यतश्च ॥४१॥

यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता
प्रकाश्यते स साधर्म्यदृष्टान्तः ॥ ४२ ॥

यथा यत्र धूमस्तत्र वह्निर्यथा महानसः ॥४३॥

यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते स वैधर्म्यदृष्टान्तः ॥ ४४ ॥

यथाग्न्यभावे न भवत्येव धूमो यथा जलाशये ४५

हेतोःसाध्यधर्म्मिण्युपसंहरणमुपनयः ॥४६॥

यथा धूमश्चात्र प्रदेशे ॥४७॥

साध्यधर्मस्य पुनर्निगमनम् ॥४८॥

यथा तस्मादग्निरत्र ॥४९॥

एते पक्षप्रयोगादयः पञ्चाप्यवयवसंज्ञया कीर्त्यन्ते ॥५०॥

उक्तलक्षणो हेतुर्द्विप्रकारःउपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५१॥

उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५२॥

द्विविधः सदंशः प्रतिषेधोऽसदंशः ॥ ५३ ॥

सचतुर्द्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥ ५४ ॥

यन्निवृत्तावेव कार्यस्यसमुत्पत्तिः सोऽस्यप्रागभावः ॥ ५५ ॥

यथा मृत्पिण्डानिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥ ५६ ॥

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥ ५७ ॥

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥ ५८ ॥

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः ५९

यथा स्तंभस्वभावात् कुंभस्वभावव्यावृत्तिः ६०

कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः ॥ ६१ ॥

यथा चेतनाऽचेतनयोः ॥६२॥

उपलब्धेरपि द्वैविध्यमाविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च ॥ ६३ ॥

तत्राऽविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ६४॥

साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति॥६५॥

तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यञ्च ६६

पूर्वचरोत्तरचरयोर्न स्वभावकार्यकारणभावौ तयोः कालव्यवहितावनुपलम्भात्॥ ६७ ॥

न चातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोःप्रबोधोत्पातौ प्रति कारणत्वं व्यवहि-

तत्त्वेन निर्व्यापारत्वात् ॥६८॥

स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रति ॥ ६९ ॥

न च व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेः ॥ ७० ॥

परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥ ७१ ॥

सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेन तदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः ॥७२

ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वात् यः प्रयत्नानन्तरीयकः स परिणतिमान् यथा स्तम्भो यो वा न परिणतिमान् स न प्रयत्नान-

न्तरीयको यथा वान्ध्येयः प्रयत्नानन्तरीयक-
श्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य
साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वै-
धर्म्येणच ॥ ७३ ॥

अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुप-
लम्भादिति कार्यस्य ॥ ७४ ॥

भविष्यति वर्षं तथाविधवारिवाहविलोक-
नादिति कारणस्य ॥ ७५ ॥

उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूद-
यदर्शनादिति पूर्वचरस्य ॥ ७६ ॥

उदगुर्मुहूर्त्तात्पूर्वं पूर्वफल्गुन्य उत्तरफल्गुनीना-
मुद्गमोपलब्धेरित्युत्तरचरस्य ॥ ७७ ॥

अस्तीह सहकारफले रूपविशेषः समास्वाद्य-
मानरसविशेषादिति सहचरस्य ॥ ७८ ॥

विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्तप्रकारा ॥ ७९ ॥

तत्राद्या स्वभावविरुद्धोपलब्धिर्यथा ॥ ८० ॥

नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भात् ॥ ८१ ॥

प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षट् ॥ ८२ ॥

विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्र सन्देहात् ॥ ८३ ॥

विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेः ॥ ८४ ॥

विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं वचः समस्तरागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वात् ॥ ८५ ॥

विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्तान्ते पुष्यतारा रोहिण्युद्गमात् ॥ ८६ ॥

विरुद्धोत्तरचरोपलब्धिर्यथा नोदगात् मुहूर्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयात् ॥८७॥

विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्या ज्ञानं सम्यग्दर्शनात् ॥ ८८ ॥

अनुपलब्धेरपिद्वैरूप्यमविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च ॥ ८९ ॥

तत्राविरुद्धानुपलब्धिःप्रतिषेधावबोधे सप्तप्रकारा ॥ ९०॥

प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिरिति ॥९१॥

स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥ ९२ ॥

व्यापकानुपलब्धिर्यथा नास्त्यत्र प्रदेशे प-
नसः पादपानुपलब्धेः ॥ ९३ ॥
कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्ति
कं बीजमङ्कुरानवलोकनात् ॥ ९४ ॥
कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्र-
भृतयो भावास्तत्त्वार्थश्रद्धानाभावात् ॥ ९५ ॥
पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्ता-
न्ते स्वातिनक्षत्रं चित्रोदयादर्शनात् ॥ ९६ ॥
उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभ-
द्रपदा मुहूर्त्तात्पूर्वमुत्तरभद्रपदोद्गमानवग-
मात् ॥ ९७ ॥
सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञा-
नं सम्यग्दर्शनानुपलब्धेः ॥ ९८ ॥
विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा ९९

विरुद्धकार्यकारणस्वभावव्यापकसहचरानुपलम्भभेदात् ॥१००॥

विरुद्धकार्यानुपलब्धिर्यथाऽत्र शरीरिणि रोगातिशयः समस्ति निरोगव्यापारानुपलब्धेः ॥१०१॥

विरुद्धकारणानुपलब्धिर्यथा विद्यतेऽत्र प्राणिनि कष्टमिष्टसंयोगाभावात् ॥१०२॥

विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमनेकान्तात्मकमेकान्तस्वभावानुपलम्भात् १०३

विरुद्धव्यापकानुपलब्धिर्यथाऽस्त्यत्र च्छाया औष्ण्यानुपलब्धेः ॥१०४॥

विरुद्धसहचरानुपलब्धिर्यथाऽस्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०५॥

इति स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयो नाम तृतीयः परिच्छेदः ॥ ३ ॥

आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ॥ १ ॥

उपचारादाप्तवचनञ्च ॥ २ ॥

यथा समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्नसानुप्रभृतयः ॥ ३ ॥

अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानञ्चाभिधत्ते स आप्तः ॥ ४ ॥

तस्य हि वचनमविसंवादि भवति ॥ ५ ॥

स च द्वेधा लौकिको लोकोत्तरश्च ॥ ६ ॥

लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादिः ॥ ७ ॥

वर्णपदवाक्यात्मकं वचनम् ॥ ८ ॥

अकारादिः पौद्गलिको वर्णः ॥ ९ ॥

वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदं पदानान्तु वाक्यम् ॥ १० ॥

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्दः ॥ ११ ॥

अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवत् यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनुसरतः ॥ १२ ॥

सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थमभिदधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥

एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोःसमस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितःसप्तधावाक्प्रयोगः सप्तभङ्गी ॥ १४ ॥

तद्यथा स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमोभङ्गः ॥ १५ ॥

स्यान्नास्त्येव सर्वमितिनिषेधकल्पनया द्वितीयः ॥ १६ ॥

स्यादस्त्येव स्यान्नास्त्येवेति क्रमतोविधिनि
षेधकल्पनया तृतीयः ॥ १७॥

स्यादवक्तव्यमेवेति यूगपद्विधिनिषेधकल्प-
नया चतुर्थः ॥ १८॥

स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पन-
या युगपद्विधिनिषेधकल्पनया च पञ्चमः १९
स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधक-
ल्पनया यूगपद्विधिनिषेधकल्पनया च षष्ठः२०

स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवे-
ति क्रमतोविधिनिषेधकल्पनया युगपद्वि-
धिनिषेधकल्पनया च सप्तमइति ॥२१ ॥
विधिप्रधानएव ध्वनिरिति न साधु॥२२॥
निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥२३ ॥
अप्राधान्येनैव ध्वनिस्तमभिधत्तइत्यप्यसारम्२४

क्रमार्पितस्वपररूपापेक्षया चित्संकल्पितं प्राधान्येनाऽप्रतिपन्नस्य तस्याप्राधान्यानुपपत्तेः ॥ २५ ॥

निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्यायादपास्तम् ॥ २६ ॥

क्रमादुभयप्रधान एवायमित्यपि न साधीयः २७

अस्य विधिनिषेधाऽन्यतरप्रधानत्वानुभव-स्याप्यबाध्यमानत्वात् ॥ २८ ॥

युगपद्विधिनिषेधात्मनोऽर्थस्यावाचक एवासौ इति वचो न चतुरस्रम् ॥ २९ ॥

तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ३०

विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपद्वाचक एव स इत्येकान्तोऽपि न कान्तः ३१

निषेधात्मनः सहद्वयात्मनश्चार्थस्य वाचकत्वावाचकत्वाभ्यामपि शब्दस्य प्रतीयमानत्वात् ॥ ३२ ॥

निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपद्वाचक एवायमित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥

इतरथापि संवेदनात् ॥ ३४ ॥

क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चावाचकश्च ध्वनिर्नान्यथा इत्यपि मिथ्या ॥ ३५ ॥

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ३६

एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुन्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ३८

प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्ता-

नामेव संभवात् ॥ ३९॥

तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

तस्याऽपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्याऽपिसप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥४२॥

इयंसप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥

प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनःकालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचःसकलादेशः४४

तद्विपरीतस्तु विकलादेशः ॥ ४५ ॥

तद्विभेदमपिप्रमाणमात्मीयप्रतिबन्धकाप-

गमविशेषस्वरूपसामर्थ्येन: प्रतिनियतमर्थमवद्योतयति ॥ ४६॥

नतदुत्पत्तितदाकारताभ्यां तयोःपार्थ्यक्येन सामस्त्येन च व्यभिचारोपलम्भात्॥४७॥

इति आगमाख्यप्रमाणस्वरूपनिर्णयोनामचतुर्थः परिच्छेदः ४

तस्य विषयः सामान्यविशेषाद्यनेकान्तात्मकं वस्तु ॥ १ ॥

अनुगतविशिष्टाकारप्रतीतिविषयत्वात् प्राचीनोत्तराकारपरित्यागोपादानावस्थानस्वरूपपरिणत्यार्थक्रियासामर्थ्यघटनाच्च २

सामान्यं द्विप्रकारं तिर्यक्सामान्यमूर्द्ध्वतासामान्यञ्च ॥ ३ ॥

प्रतिव्यक्तितुल्यापरिणतिस्तिर्यक्सामान्यं शबलशाबलेयादिपिण्डेषु गोत्वं यथा॥४॥

पूर्वापरपरिणामसाधारणंद्रव्यमूर्द्धतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवत् ॥५॥

विशेषोपि द्विरूपो गुणः पर्यायश्च ॥ ६ ॥

गुणः सहभावीधर्मो यथात्मनि विज्ञानव्यक्तिशक्त्यादिः ॥ ७ ॥

पर्यायस्तुक्रमभावी यथातत्रैवसुखदुःखादिः८

इतिविषयस्वरूपनिर्णयोनामपञ्चमः परिच्छेदः ।

यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥ १ ॥

तद्विविधमानन्तर्येण पारम्पर्येण च ॥ २ ॥

तत्राऽऽनन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥ ३ ॥

पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥ ४ ॥

शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥ ५ ॥

तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः ॥ ६ ॥

उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन हेतोर्व्यभिचारइति न विभावनीयम् ॥ ७॥

तस्यैकप्रमातृतादात्म्येन प्रमाणादभेदव्यवस्थितेः ॥ ८ ॥

प्रमाणतया परिणतस्यैवात्मनः फलतया परिणतिप्रतीतेः ॥ ९॥

यः प्रमिमीते सएवोपादत्ते परित्यजत्युपेक्ष-

ते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् ॥ १० ॥

इतरथा स्वपरयोः प्रमाणफलव्यवस्थाविप्लवः प्रसज्येत ॥ ११ ॥

अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्तइति नाशङ्कनीयम् ॥ १२ ॥

कथञ्चित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानात् १३

साध्यसाधनभावेन प्रमाणफलयोःप्रतीयमानत्वात् ॥ १४ ॥

प्रमाणंहि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वात् ॥ १५ ॥

स्वपरव्यवसितिक्रियारूपाऽज्ञाननिवृत्त्याख्यं फलंतु साध्यं प्रमाणनिष्पाद्यत्वात् ॥ १६ ॥

प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथ-
ञ्चिद्भेदः ॥ १७॥

कर्तृक्रिययोःसाध्यसाधकभावेनोपलम्भात्॥
कर्त्ता हि साधकः स्वतन्त्रत्वात् क्रियातु सा-
ध्या कर्तृनिर्वर्त्यत्वात् ॥१९॥

न च क्रियाक्रियावतः सकाशादभिन्नैव
भिन्नैव वा प्रतिनियतक्रियाक्रियावद्भावभङ्ग-
प्रसङ्गात् ॥ २० ॥

संवृत्या प्रमाणफलव्यवहार इत्यप्रामाणिक-
प्रलापः परमार्थतः स्वाभिमतसिद्धिविरो-
धात् ॥ २१ ॥

ततः पारमार्थिक एव प्रमाणफलव्यवहारः
सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्यः।२२।
प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीतं तदा-

भासम् ॥ २३ ॥

अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ॥ २४ ॥

यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसंशयानध्यवसायाः ।

तेभ्यः स्वपरव्यवसायस्यानुपपत्तेः ॥ २६ ॥

सांव्यवहारिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २७ ॥

यथाऽम्बुधरेषु गन्धर्वनगरज्ञानं दुःखे सुखज्ञानञ्च ॥ २८ ॥

पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २९ ॥

यथा शिवाख्यस्य राजर्षेरसंख्यातद्वीपसमु-

द्वेषु सप्तद्वीपसमुद्रज्ञानम् ॥ ३० ॥

अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभासम् ॥ ३१ ॥

अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथा

तुल्ये पदार्थे स एवायमित्येकस्मिंश्च तेन तुल्य इत्यादिज्ञानं प्रत्यभिज्ञाभासम्॥३३॥

यमलकजातवत् ॥३४॥

असत्यामपि व्याप्तौ तदवभासस्तर्काभासः ३५

सश्यामो मैत्रतनयत्वात् इत्यत्र यावान् मैत्रतनयः सश्यामः इति यथा ॥३६॥

पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमवसेयम् ॥३७॥

तत्र प्रतीतानिराकृतानभीप्सितसाध्यधर्मविशेषणास्त्रयः पक्षाभासाः ॥३८॥

प्रतीतसाध्यधर्म्मविशेषणो यथार्हतान् प्र-
त्यवधारणवर्जं परेण प्रयुज्यमानः सम-
स्तिजीव इत्यादि ॥३९॥

निराकृतसाध्यधर्मविशेषणः प्रत्याक्षानुमा-
नागमलोकस्ववचनादिभिः साध्यधर्मस्य
निराकरणादनेकप्रकारः ॥ ४० ॥

प्रत्यक्षनिराकृतसाध्यधर्म्मविशेषणो यथा
नास्तिभूतविलक्षणआत्मा ॥ ४१ ॥

अनुमाननिराकृतसाध्यधर्मविशेषणो यथा
नास्ति सर्वज्ञो वीतरगो वा ॥४२॥

आगमनिराकृतसाध्यधर्मविशेषणो यथा
जैनै रजनिभोजनं भजनीयम् ॥४३॥

लोकनिराकृतसाध्यधर्म्मविशेषणो यथा ना-
पारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥४४॥

स्ववचननिराकृतसाध्यधर्म्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदकं प्रमाणम् ॥४५॥

अनभीप्सितसाध्यधर्म्मविशेषणो यथा स्याद्वादिनः शाश्वतिकएव कलशादिरशाश्वतिक एवेति वदतः ॥४६॥

असिद्धविरुद्धानैकान्तिकास्त्रयोहेत्वाभासाः ॥ ४७ ॥

यस्यान्यथानुपपत्तिः प्रमाणेन न प्रतीयते सोऽसिद्धः ॥४८॥

सद्विविध उभयासिद्धोऽन्यतरासिद्धश्च ४९

उभयासिद्धो यथा परिणामीशाब्दश्चाक्षुषत्वात् ॥५०॥

अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ।५१।

साध्यविपर्ययेणैव यस्यान्यथानुपपत्तिरध्यव-
सीयते स विरुद्धः ॥५२॥

यथा नित्यएव पुरुषोऽनित्यएव वा प्रत्यभि-
ज्ञानादिमत्वात् ॥५३॥

यस्यान्यथानुपपत्तिः सन्दिह्यते सोऽनैका-
न्तिकः ॥ ५४ ॥

सद्वेधा निर्णीतविपक्षवृत्तिकः सन्दिग्ध-
विपक्षवृत्तिकश्च ॥ ५५ ॥

निर्णीतविपक्षवृत्तिको यथा नित्यः शब्दः
प्रमेयत्वात् ॥५६॥

सन्दिग्धविपक्षवृत्तिको यथा विवादापन्नः
पुरुषः सर्वज्ञो न भवति वक्तृत्वात् ॥५७॥

साधर्म्येण दृष्टान्ताभासोनवप्रकारः ॥५८॥

साध्यधर्मविकलः साधनधर्मविकलः उभ-

यत्रधर्म्माविकलः सन्दिग्धसाध्यधर्म्मा सन्दिग्धसाधनधर्म्मा सन्दिग्धोभयधर्म्मानन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ५९।

तत्रापौरुषेयः शब्दोऽमूर्त्तत्वाद्दुःखवदिति साध्यधर्म्माविकलः ॥ १ ॥ ६० ॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमाणुवदिति साधनधर्म्मविकलः ॥ १॥६१॥

कलशवदित्युभयधर्म्माविकलः ॥ १ ॥ ६२॥

रागादिमानयं वक्तृत्वाद्देवदत्तवदिति सन्दिग्धसाध्यधर्मा ॥ ३ ॥ ६३ ॥

मरणधर्मायं रागादिमत्वात् मैत्रवदिति संदिग्धसाधनधर्मा ॥ ५ ॥६४॥

नायं सर्वदर्शीरागादिमत्त्वान्मुनिविशेषवदिति सन्दिग्धोमयधर्मा । ६ । ६५ ॥

रागादिमान् विवक्षितः पुरुषोवक्तृत्वादिष्ट-
पुरुषवदित्यनन्वयः । ७ । ६६ ॥

अनित्यः शब्दः कृतकत्वात् घटवदित्य-
प्रदर्शितान्वयः । ८ । ६७ ॥

अनित्यः शब्दः कृतकत्वात् यदनित्यं
तत् कृतकं घटवदिति विपरीतान्वयः।९।६८॥

वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥६९॥

असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यति-
रेकोऽसिद्धोभयव्यतिरेकः सन्दिग्धसाध्य-
व्यतिरेकः सन्दिग्धसाधनव्यतिरेकः सन्दि-
ग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्य-
तिरेको विपरीतव्यतिरेकश्च ॥ ७० ॥

तेषु भ्रान्तमनुमानं प्रमाणत्वात्यत्पुनर्भ्रान्तं
न भवति न तत् प्रमाणं यथा स्वप्नज्ञानमिति

असिद्धसाध्यव्यतिरेकः स्वप्न ज्ञानात् भ्रान्तत्वस्यानिवृत्तेः । १ । ७१ ॥

निर्विकल्पकं प्रत्यक्षं प्रमाणत्वाद्यत्तु सविकल्पकं न तत्प्रमाणं यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः । २ । ७२ ॥

नित्यानित्यःशब्दः सत्वात् यस्तु न नित्यानित्यः सनसंस्तद्यथा स्तम्भ इत्यसिद्धोभयव्यतिरेकः स्तम्भान्नित्यान्नित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः । ३ । ७३ ॥

असर्वज्ञोऽनाप्तो वा कपिलोऽक्षीणकैकान्तवादित्वाद्यः सर्वज्ञ आप्तो वा सक्षणिकैकान्तवादी यथासुगत इति सान्दिग्धसाध्यव्यतिरेकः सुगतेऽसर्वज्ञतानाप्तत्वयोः साध्य-

धर्म्मयोर्व्यावृत्तेः सन्देहात् । ४ । ७४ ॥

अनादेयवचनः कश्चिद्विवक्षितः पुरुषोरागा-दिमत्त्वाद्यः पुनरादेयवचनः स वीतराग-स्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधन-व्यतिरेकः शौद्धोदनौ रागादिमत्वस्य निवृत्तेः संशयात् । ७५ ॥५॥

नवीतरागः कापिलः करुणास्पदेष्वपि परम-कृपयाऽनर्प्पितनिजपिशितशकलत्वात् य-स्तुवीतरागः स करुणास्पदेषुपरमकृपया स-मर्प्पितनिजपिशितशकलस्तद्यथातपनबन्धु-रितिसन्दिग्धोभयव्यतिरेकः तपनबन्धौवीत-रागत्वाभावस्य करुणास्पदेष्वपि परमकृपया-नर्प्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् । ६ ॥ ७६ ॥

न वीतरागः कश्चिद्विवक्षितः पुरुषोवक्तृ-
त्वात् यः पुनर्वीतरागो न स वक्ता यथोपल-
खण्डइत्यव्यतिरेकः । ७७ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वादाकाशवदित्य-
प्रदर्शितव्यतिरेकः । ७८ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वाद्यदकृतकं तन्नित्यं
यथाकाशमिति विपरीतव्यतिरेकः ।७९॥२॥

उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने
तदाभासौ ॥ ८० ॥

यथापरिणामीशब्दः कृतकत्वाद्यः कृतकः
स परिणामी यथा कुम्भ इत्यत्र परिणामी
च शब्द इति कृतकश्च कुम्भ इति च ८१।

तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्द-
इति तस्मात्परिणामी कुम्भ इति वा ॥८२॥

अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ।८३।

यथा मेकलकन्यकायाः कूले तालहिंताल- योर्मूलेसुलभाः पिण्डखर्जूराः सन्तित्वरितं गच्छत २ शावकाः ॥ ८४ ॥

प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्यानं तस्य संख्याभासम् ॥ ८५ ॥

सामान्यमेव विशेषएव तद्वयं वा स्वतन्त्र- मित्यादिस्तस्य विषयाभासः ॥ ८६ ॥

अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासम् ॥ ८७ ॥

इति फलप्रमाणस्वरूपाद्याभासनिर्णयोनाम षष्ठः परिच्छेदः ॥ ६ ॥

नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः सप्रतिपत्तुरभिप्रायविशेषो नयः ॥ १ ॥

स्वाभिप्रेतादंशादितरांशापलापी पुनर्नयाभासः ॥ २ ॥

सव्याससमासाभ्यान्द्विप्रकारः ॥ ३ ॥

व्यासतोऽनेकविकल्पः ॥ ४ ॥

समासतस्तुद्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च ॥ ५ ॥

आद्यो नैगमसंग्रहव्यवहारभेदात्त्रेधा ॥६॥

धर्म्मयोर्धर्म्मिणोर्धर्म्मधर्म्मिणोश्चप्रधानोपसर्जनभावेन यद्विवक्षणं सनैकगमोनैगमः ॥ ७ ॥

सच्चैतन्यमात्मनीतिधर्म्मयोः ॥ ८ ॥

वस्तुपर्यायवद्द्रव्यं इति धर्म्मिणोः ॥ ९ ॥
क्षणमेकं सुखीविषयासक्तजीवइति धर्म-
धर्म्मिणोः ॥ १० ॥

धर्म्मद्वयादीनामैकान्तिकपार्थक्याभिसन्धि-
र्नैगमाभासः ॥ ११ ॥
यथात्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग्
भूते इत्यादि ॥ १२ ॥

सामान्यमात्रग्राही परामर्शः संग्रहः ॥१३॥
अयमुभयविकल्पः परोऽपरश्च ॥ १४ ॥
अशेषविशेषेष्वौदासीन्यम्भजमानः शुद्ध-
द्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः १५
विश्वमेकं सदविशेषादिति यथा ॥ १६ ॥
सत्ताद्वैतं स्वीकुर्वाणः सकलविशेषान्निरा-
चक्षाणस्तदाभासः ॥ १७ ॥

यथासत्तैव तत्त्वन्ततः पृथग्भूतानां विशेष-
णामदर्शनात् ॥ १८ ॥

द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वा-
नस्तद्भेदेषु गजनिमीलिकामवलम्बमानः
पुनरपरसंग्रहः ॥ १९ ॥

धर्माधर्माकाशकालपुद्गलजीवद्रव्याणा-
मैक्यं द्रव्यत्वाभेदादित्यादिर्यथा ॥ २० ॥

द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नु-
वानस्तदाभासः ॥ २१ ॥

यथा द्रव्यत्वमेव तत्त्वं ततोर्थान्तरभूतानां
द्रव्याणामनुपलब्धेः ॥ २२ ॥

संग्रहेण गोचरीकृतानामर्थानां विधिपूर्व-
कमवहरणं येनाभिसन्धिना क्रियते स व्य-
वहारः ॥ २३ ॥

यथा यत्सत्तद्द्रव्यं पर्यायोवेत्यादि ॥२४॥

यः पुनरपारमार्थिकद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः ॥ २५ ॥

यथा चार्वाकदर्शनम् ॥ २६ ॥

पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ॥ २७ ॥

ऋजुवर्त्तमानक्षणस्थायिपर्यायमात्रंप्राधान्यतः सूत्रयन्नभिप्राय विशेष ऋजुसूत्रः ॥ २८ ॥

यथासुखविवर्त्तः सम्प्रत्यस्तीत्यादि ॥२९॥

सर्वथाद्रव्यापलापीतदाभासः ॥ ३० ॥

यथा तथागतमतम् ॥ ३१ ॥

कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः ॥ ३२ ॥

यथा बभूव भवति भविष्यति सुमेरुरित्यादिः।

तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः ३४
यथा बभूव भवति भविष्यति सुमेरुरित्याद-
योभिन्नकालः शब्दाभिन्नमेवार्थमभिदध-
ति भिन्नकालशब्दत्वात्ताहृक्सिद्धान्यश-
ब्दवदित्यादिः ॥ ३५ ॥
पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं सम-
भिरोहन्समभिरूढः ॥ ३६ ॥
इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात्
पुरन्दर इत्यादिषु यथा ॥ ३६ ॥
पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकु-
र्वाणस्तदाभासः ॥ ३७ ॥
यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दाभि-
न्नाभिधेयाएव भिन्नशब्दत्वात् करिकुरङ्ग-
तुरङ्गशब्दवदित्यादिः ॥ ३८ ॥

शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियाविशिष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ।३९।

यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ।४०।

क्रियानाविष्टं वस्तुशब्दवाच्यतया प्रतिक्षिपंस्तुतदाभासः ॥ ४२ ॥

यथाविशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घटशब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥

एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थनयाः शेषास्तुत्रयः शब्दवाच्यार्थगोचरतया शब्दनयाः ॥ ४४ ॥

पूर्वः पूर्वोनयः प्रचुरगोचरः परः परस्तु परिमितविषयः ॥ ४५ ॥

सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभू-
मिकत्वात् भूमविषयः ॥ ४६ ॥

सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्त-
सत्समूहोपदर्शकत्वात्बहुविषयः ॥ ४७ ॥

वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकाल-
विषयावलम्बित्वादनल्पार्थः ॥ ४८ ॥

कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृ-
जुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥ ४९ ॥

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभि-
रूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूत-
विषयः ॥ ५० ॥

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभू-
तात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महा-
गोचरः ॥ ५१ ॥

नयवाक्यमपि स्वविषये प्रवर्त्तमानं विधि-प्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५२ ॥

प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥५३॥

प्रमाताप्रत्यक्षादिप्रसिद्ध आत्मा ॥ ५४ ॥

चैतन्यस्वरूपः परिणामीकर्त्ता साक्षाद्भोक्ता-स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलि-कादृष्टवांश्चायम् ॥ ५५ ॥

तस्योपात्तपुंस्त्रीशरीरस्य सम्यग्ज्ञानक्रियाभ्यां कृत्स्नकर्मक्षयस्वरूपासिद्धिः ॥ ५६ ॥

इति श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वा-लोकालङ्कारेनयात्मस्वरूपनिर्णयो नाम सप्तमः परिच्छेदः ॥ ७ ॥

अष्टमः परिच्छेदः ।

विरुद्धयोर्धर्म्मयोरेकधर्म्मव्यवच्छेदेनस्वीकृत-तदन्यधर्म्मव्यवस्थापनार्थं साधनदूषण-वचनं वादः ॥ १ ॥

प्रारम्भकश्चात्र विजिगीषुस्तत्त्वनिर्णिनीषुश्च

स्वीकृतधर्मव्यवस्थापनार्थं साधनदूषणाभ्यां परं पराजेतुमिच्छुर्जिगीषुः॥ ३ ॥

तथैव तत्त्वंप्रतितिष्ठापयिषुस्तत्त्वनिर्णिनीषुः ४

अयं च द्वेधा स्वात्मनि परत्र च ॥५ ॥

आद्यः शिष्यादिः ॥ ६ ॥

द्वितीयोगुर्वादिः ॥ ७ ॥

अयं द्विविधः क्षायोपशमिकज्ञानशाली केवली च ॥ ८ ॥

एतेन प्रत्यारम्भकोपि व्याख्यातः ॥ ९ ॥

तत्र प्रथमे प्रथमतृतीयतुरीयाणां चतुरङ्गए-

वान्यनमस्याप्यङ्गस्याभावे जयपराजयव्यव-
स्थादिदौस्थ्यापत्तेः ॥१०॥

द्वितीये तृतीयस्य कदाचिद्व्यङ्गः कदाचित्त्र्यङ्गः
तत्रैव द्व्यङ्गस्तुरीयस्य ॥१२॥

तृतीये प्रथमादीनां यथायोगं पूर्ववत् ॥१३॥

तुरीये प्रथमादीनामेवम् ॥१४॥

वादिप्रतिवादिसभ्यसभापतयश्चत्वार्य्यङ्गानि
प्रारम्भकप्रत्यारम्भकावेव मल्लप्रतिमल्ल-
न्यायेन वादिप्रतिवादिनौ ॥ १६ ॥

प्रमाणतः स्वपक्षस्थापनप्रतिपक्षप्रतिक्षेपाव-
नयोः कर्म्म ॥१७॥

वादिप्रतिवादिसिद्धान्ततत्त्वनदीष्णत्वधार-
णाबाहुश्रुत्यप्रतिभाक्षान्तिमाध्यस्थैरुभयाभि-
मताः सभ्याः ॥ १८ ॥

वादिप्रतिवादिनोर्यथायोगं वादस्थानक-
कथाविशेषाङ्गीकारेणाग्रवादोत्तरवादनिर्देशः
साधकबाधकोक्तिगुणदोषावधारणं यथा-
वसरन्तत्त्वप्रकाशनेन कथाविरमणं यथासंभ-
वं सभायांकथाफलकथनं चैषांकर्माणि ॥१९॥
प्रज्ञाज्ञैश्वर्यक्षमामाध्यस्थ्यसंपन्नः सभापतिः॥
वादिसभ्याभिहितावधारणकलहव्यपोहादिकं
चास्य कर्म्म ॥२१॥
सजिगीषुकेऽस्मिन्यावत्सभ्यापेक्षं स्फूर्तौवक्त-
व्यम् ॥ २२ ॥
उभयोस्तत्त्वनिर्णिनीषुत्वेयावत्तत्त्वनिर्णयं
यावत्स्फूर्त्तिं च वाच्यम् ॥ २३ ॥
इतिश्रीदेवाचार्यनिर्मितेप्रमाणनयतत्त्वालोका-
लङ्कारेवादिप्रतिवादिन्यायनिर्णयोनामाष्टमः
परिच्छेदः ॥ ८ ॥

श्रीजैनयशोविजयग्रन्थमाला (१)

॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

श्रीकाशीस्थ न्यायविशारद महामहोपाध्याय श्रीयशोविजय नामाङ्कित श्वेताम्बर जैन संस्कृत पाठशालातः प्रादुर्भूतः

काश्यां
चन्द्रप्रभायन्त्रागारे मुद्रितश्च
वीर सं० २४३० सन् १९०४





पायं पायं प्रवचनसुधां प्रीयते या प्रकामं
स्वैरं स्वैरं चरति कृतिनां कीर्तिवल्लीवनेषु
दोग्ध्री कामान्नवनवरसैः सा भृशं प्रीणयन्ती
मादृग् वत्सान् जयति जगति श्रीगवीदेवसूरेः
"श्रीरत्नप्रभाचार्यः"

अर्हम्

## प्रस्तावना ।

—:o:—

अथास्यां संसृतिसरण्यां समागत्य सर्वे शरीरिणः शान्तिशकलमप्यनासादयन्तः समयसरीसृपशीर्णाः संसारापारपारावारपारमुपसर्तुमपारयन्तः परमपारमार्थिकपदमपि पुण्यपद्यया प्राप्तुमपारमार्थिकं मन्वानाः क्षोदिष्ठप्रज्ञया सर्वाऽवज्ञया च पाञ्चभौतिकपिण्डप्रेष्ठाः कलिकल्मषकालिमकलङ्कद्राघिष्ठा विषमविषविषयाशीविषदष्टविशीर्णविषस्फेष्ठाः किंवा विषकीटा इव विषयविषभुजोऽनादिदुर्वासनावासितबुद्धयश्चाहमहमिकामेव परमपुरुषार्थं साधिष्ठमाकलयन्तोवलिताश्च गरिष्ठाहोपुरुषिकया प्रत्यहं पितृवने दीर्घनिद्रासुखमनुभवन्तः क्रियासमभिहारेण ह्रसिष्ठजननीजठरे वसन्तः सांसारिकानेकबंहिष्ठकटुक्लेशपाशिताः सुप्तप्रबुद्धा इव प्रबुद्धसुप्ता इव तिष्ठन्ति ।

तदत्र किं कारणं को हेतुः किं प्रयोजनं कस्मादित्थमिति साम्रेडितप्रश्नावसरे सर्वमेतदविद्याविलाससाम्राज्येनेति वारं वारं वयमुत्तरयामः ।

हंहो त्रिलक्षणशेमुषीका विचक्षणाः! शुभवन्तोभवन्तः सहृदयहृदयसन्तोषप्रददन्तोषितरसज्ञ रसज्ञा रस ज्ञापितं कर्ण्यतांवहत्किमपि श्वःश्रेयसमिदमाकर्ण्य नीरक्षीरविवेचनविलक्षणचेतनाचातुरीचमत्कारचमत्कृताः सकृदप्योमिति ब्रूयुः ।

अविद्यानिरासार्थमेव प्रयतमानैरस्माभिः श्रीजैनयशोविजयग्रन्थमाला ऽनर्घ्यमणिगणगुम्फिता हारभूतेव भवतां श्रीमतामुपहारीयते ।

तस्यामेकेयं मणीरामायिता प्रमाणनयतत्वालोकालङ्काररूपा सर्वोपरि सुमेरुभूतेव विलसति ।

अमुं ग्रन्थं श्री १०८ सुगृहीतनाम्नोवादिप्रवरदेवसूरेर्मुखाम्भोजनिर्गलितामृतधाराऽऽसारमिव प्रमाणनयतत्वालोकालङ्कारमदृष्टपूर्वं जैनमतमन्तव्यप्रमाणविचारकरं दुर्वादिवादवासनानिर्यातनपरं विलक्षणभङ्गीकं सप्तभङ्गीतरङ्गरिङ्गितं निबन्धं निरीक्ष्य किमिदं कथमिदं कस्येदं कीदृक्षमिदमिति स्वभावेनैव जिज्ञासवः संपत्स्यन्ते तत्त्वग्रहाग्रहग्रहिलाः शास्त्रप्रियाप्रियास्तदत्रावश्यकं किञ्चनोपन्यस्तुम् ।

तत्र प्रथममवधेयं धीमद्धौरेयैस्तत्रभवद्भिः, यत्कस्यापि मतस्य तत्त्वमनाकलय्य खण्डनमण्डनबद्धपरिकरा ये यथा-

जाताः सलभा इव परिपतन्ति ते लभन्ते न स्वात्मविनाशादृते किञ्चिदपि भावुकम् ।

श्रीवादिदेवसूरिभगवतोऽन्तेवासी श्रीरत्नप्रभसूरिर्वसुलोकार्क १२३८ मिते विक्रमाब्दे निजनिर्मितोपदेशमालाटीकायामेवं व्यलेखीत् ।

शिष्यः श्रीमुनिचन्द्रसूरिमुनिभिर्गीतार्थचूडामणिः
पट्टे स्वे विनिवेशितस्तदनु स श्रीदेवसूरिप्रभुः ।
अस्थाने जयसिंहदेवनृपतेर्येनास्तादिग्वाससा
स्त्रीनिर्वाणसमर्थनेन विजयस्तम्भः समुत्तम्भितः ॥

तत्पट्टप्रभवोभवन्नथ गुणग्रामाभिरामोदयाः
श्रीभद्रेश्वरसूरयः शुचिधियस्तन्मानसप्रीतये ।
श्रीरत्नप्रभसूरिभिः शुभकृते श्रीदेवसूरिप्रभोः
शिष्यैः सेयमकारि संमदकृते वृत्तिर्विशेषार्थिनाम् ॥

तथा च ।

विक्रमाद् वसुलोकार्क १२३८ वर्षे माघे समार्थिता
एकादश सहस्राणि मानं सार्धं शतं तथा ॥ ११५०

अस्माद् श्रीरत्नप्रभसूरेः समयः स्फुटमेवावभाति—

किञ्च किञ्चिन्न्यूनाधिकः सएव समयस्तदीयगुरोर्देव सूरेरपि चास्मादेवनिर्णेतुं शक्यस्तथापि दुर्बद्धं सुबद्धामिति न्यायेन पुनः प्रमाणान्तरं प्रदर्श्यते ।

श्रीमुनिसुन्दरसूरिणा रसर्तुमनुमिते १४६६ ऽब्दे *गुर्वावल्यामेवं व्यलेखि ।

अष्टहयेशमिते ऽब्दे ११७८ विक्रमकालाद्दिवं गतो भगवान् ।
श्रीमुनिचन्द्रमुनीन्द्रो ददातु भद्राणि संघाय ॥ ७१ ॥
तस्मादभूदजितदेवगुरुर्गरीयान्
प्राच्यस्तपः श्रुतिनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो
वादीश्वरोऽस्तगुणचन्द्रमदोपि बाल्ये ॥ ७२ ॥
येनार्दितश्चतुरसीतिसुवादिलीला-
लब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः
श्रीसिद्धभूमिपतिसंसदि पत्तनेऽस्मिन् ॥ ७३ ॥
वेदमुनीशमिते ११७४ ऽब्दे देवगुरुर्जगदनुत्तरोभ्युदितः ।
श्रीमुनिचन्द्रगुरोरिति शिष्या बहवोभवन् विदिताः ७४ ॥

* रसरसमनुमितवर्षे १४६६ मुनिसुन्दरसूरिणा कृतापूर्वम् ।
मध्यस्थैरवधार्या गुर्वावलीयं जयश्रीद्धा ॥ ८६ ॥

अस्मादपि स्फुटतरःसमयोदी पवद्देदीप्यते ।

श्रीपूज्यपाददेवसूरिरेव प्रमाणनयतत्वालोकालङ्कारस्य रत्नाकरनाम्नीं महाव्याख्यां रचितवान् ।

तद् विषयेऽपि गुर्वावल्यां लिखितमास्ति—

**स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां नहि देवसूरिः ।**
**यतश्चतुर्विंशतिसूरिशाखं यस्यैव नाम्ना विदितंबभूव ७४**

देवसूरिशिष्यैः श्रीरत्नप्रभसूरिभिर्नातिलघीयसी रत्नाकरावतारिका नाम्नी टीका विनिर्मितास्ति । या मूलटिप्पणपञ्जिकाभिः साहिता मुद्रणालये मुद्रयितुमारब्धा तस्यामेवं लिलेख श्रीरत्नप्रभः ।

**यैरत्र स्वप्रभया दिगम्बरस्यार्पिता परा भूतिः ।**
**प्रत्यक्षं विबुधानां जयन्तु ते देवसूरयोनव्याः ॥ ३ ॥**

**अस्मादपि स्फुटतमःसमयो श्रीधर्मसागरोपाध्यायैस्तपगच्छपट्टावल्यां प्राकाश्यमानीतः । तथा श्रीमुनिचन्द्रसूरिशिष्याः॥ श्रीअजितदेवसूरिवादिश्रीदेवसूरिप्रभृतयः । तत्र वादिश्रीदेवसूरिभिः श्रीमदणहिल्लपुरपत्तने जयसिंहदेवराजस्याऽनेकविद्वज्जनकलितायां सभायां चतुरशीतिवादलब्धजययशसं दिगम्बरचक्रवर्त्तिनं वादलिप्सुं**

कुमुदचन्द्राचार्यं वादे निर्जित्य श्रीपत्तने दिगम्बरप्रवेशो निवारितोऽद्यापि प्रतीतः। तथा वि० चतुरधिकद्वादशशत १२०४ वर्षे फलवर्द्धिग्रामे चैत्यबिम्बयोः प्रतिष्ठाकृता तत्तीर्थन्तु सम्प्रत्यपि प्रसिद्धं। तथा आरासणे च श्रीनेमिनाथप्रतिष्ठाकृता। चतुरशीति सहस्र ८४००० प्रमाणः स्याद्वादरत्नाकरनामा प्रमाणग्रन्थः कृतः। येभ्यश्च यन्नाम्नैव ख्यातिमत् चतुर्विंशतिसूरिशाखं बभूव। एषां च वि० चतुस्त्रिंशदधिके एकादशशत ११३४ वर्षे जन्म द्विपञ्चाशदधिके ११५२ दीक्षा। चतुःसप्तत्यधिके ११७४ सूरिपदं। षड्विंशत्यधिकद्वादशशत १२२६ वर्षे श्रावणवदिसप्तम्यां ७ गुरौ स्वर्गः।

प्रभावकचरित्रेऽप्येवं श्रीप्रद्युम्नसूरिभिः समयनिर्णयः कृतः।

वेदशिखिशिवे जन्म दीक्षा युग्मशरेश्वरे। वेदाश्वशंकरे वर्षे सूरित्वमभवत्प्रभोः॥ रसयुग्मरवौ वर्षे श्रावणे मासि संगते। कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने॥ मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरन्दरबोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः॥

Similarly, the following passage occurs in "Extracts from the Historical Records of the Jains by Johannes Klatt Ph. D. of Berlin" published in the Indian Antiquary of September 1882:—

A pupil of Munichandra was Dêvasûri, who conquered the Digambara Kumudachandrâchârya in a dispute before Jayasiṁhadêva, king of Aṇahillapurapattana, and thereby hindered the entrance

of the Digambaras into that town. In Saṁ. 1204 Dêvasûri founded a chaitya and raised a *bimba* at Phalavarddhigrâma ( तत्तीर्थं संप्रत्यपि प्रसिद्धं ), and made a Nêminâthapratishṭhâ at Ârâsana. He composed *Syâdvâdaratnâkarâ*, a *pramâṇagrantha*, from whence sprang the *Chaturviṁśatisûriśâkhâ*. Dêvasûri was born Sam. 1134; *dîkshâ* 1152; *sûripada* 1174; *svarga* 1226 Śrâvana vadi 7 Gurau.

श्रीमल्लधारिराजशेखरसूरिणा पञ्जिकाकारेणापि लिखित-मस्ति ।

**स्याद्वादरत्नाकर इत्यस्ति ग्रन्थोमहत्तमः ।**
**वादिवृन्दारकश्रीमद्देवसूरिविनिर्मितः ॥ ४ ॥**

न्यायशास्त्रस्यायमद्वितीयोग्रन्थः

**अत्राष्टौ परिच्छेदाः सन्ति ।**

तत्र प्रथमपरिच्छेदे–प्रमाणस्वरूपनिर्णयः ।

द्वितीये परिच्छेदे–प्रत्यक्षस्वरूपनिर्णयः ।

तृतीयपरिच्छेदे–स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयः

चतुर्थपरिच्छेदे–आगमाख्यप्रमाणस्वरूपनिर्णयः ।

पञ्चमपरिच्छेदे–विषयस्वरूपनिर्णयः ।

षष्ठपरिच्छेदे–फलप्रमाणस्वरूपाद्याभासनिर्णयः ।

सप्तमपरिच्छेदे–नयात्मस्वरूपनिर्णयः ।

अष्टमपरिच्छेदे—वादिप्रवादिन्यायनिर्णयः ।

एतद्ग्रन्थमुद्रणावसरे पञ्चषाणि पुस्तकानि प्राप्तानि, तेषांमध्ये

१ श्री महामान्यधन्यतम धर्मविजयमुनीन्द्रतो लब्धमेकं पुस्तकम् ।

२ श्री मुनिराज वीरविजयेन दत्तमेकं पुस्तकम् ।

३ श्रीमुनिना अमिविजयेन महाशयेनापिपुस्तकमेकंसमर्पितम्।

४ श्रीकेशरविजयमुनितोपि पुस्तकमेकं समासादितम् ।

५ भावनगरस्थश्राद्धवर्य्य कुंवरजी आनन्दजी इत्यनेन श्रावकेनात्र महती सहायता दत्ता ।

६ श्रीपं. अम्बादत्तशास्त्रिणां समीपेपुस्तमेकमाप्तम् ।

पूर्वोक्तमहाशयानां भूयांसं परिश्रमं चोपकृतिं च तेषां सप्रश्रयमङ्गीकरोतीयं पाठशाला ।

यद्यपि पूर्वोक्तानि पुस्तकानि दृष्ट्वा शोधितोयं ग्रन्थस्तथापि मनुष्यसहभूर्भ्रान्तिर्दुर्वारा तदत्र दृष्टिदोषात् शीशकाक्षरयोजनदोषाद् वा या काचना ऽशुद्धिर्भवेत् तत्स्वपुस्तके परिमृज्य कृपया पाठशालामपि सूचयेयुः सज्जनाः इतिप्रार्थयते

**काशीस्थजैनयशोविजयसंस्कृतपाठशाला ।**



॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

## प्रथमः परिच्छेदः ।

रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।
शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये ॥ १ ॥

प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते १ ॥

स्वपरव्यवसायिज्ञानं प्रमाणम् ॥ २ ॥

अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणमतोज्ञानमेवेदम् ॥ ३ ॥

नवै सान्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नंत-

स्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतम-
त्वानुपपत्तेः ॥ ४ ॥

नखल्वस्य स्वनिर्णीतौ करणत्वं स्तंभादेरि-
वाचेतनत्वात् नाप्यर्थनिश्चितौ स्वनिश्चि-
तावकरणस्य कुंभादेरिवतत्राप्यकरणत्वात् ५॥

तद्व्यवसायस्वभावं समारोपपरिपन्थित्वात्-
प्रमाणत्वाद्वा ॥ ६ ॥

अतस्मिँस्तदध्यवसायः समारोपः ॥ ७ ॥

सविपर्ययसंशयानध्यवसायभेदात्त्रेधा ॥८॥

विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥ ९ ॥

यथा शुक्तिकायामिदं रजतमिति ॥१०॥

साधकबाधकप्रमाणाभावादनवस्थिता-
नेककोटिसंस्पर्शिज्ञानं संशयः ॥ ११ ॥

यथाऽयं स्थाणुर्वा पुरुषोवेति ॥ १२ ॥

किमित्यालोचनमात्रमनध्यवसायः ॥१३॥

यथागच्छतस्तृणस्पर्शज्ञानम् ॥ १४॥

ज्ञानादन्योऽर्थः परः ॥ १५॥

स्वस्य व्यवसायःस्वाभिमुख्येन प्रकाशनं बाह्यस्येवतदाभिमुख्येन करिकलभकमहमात्मनाजानामीति ॥ १६॥

कः खलुज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपितत्प्रकारं नाभिमन्येत मिहिरालोकवत् ॥ १७॥

ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम् १८॥

तदितरत्त्वप्रामाण्यम् ॥ १९॥

तदुभयमुत्पत्तौ परतएव ज्ञप्तौ तु स्वतः परतश्चेति ॥ २०॥

श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

## अथ द्वितीयः परिच्छेदः

तद्विभेदं प्रत्यक्षं च परोक्षं च ॥ १ ॥

स्पष्टं प्रत्यक्षम् ॥ २ ॥

अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥ ३ ॥

तद्विप्रकारं सांव्यवहारिकं पारमार्थिकं च॥४॥

तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥ ५ ॥

एतद्वितयमवग्रहेहावायधारणाभेदादेकश[1]श्चतुर्विकल्पकम् ॥ ६ ॥

विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः ॥ ७ ॥

अवगृहीतार्थविशेषाकाङ्क्षणमीहा ॥ ८ ॥

---

१ 'एकैकश' इत्यपिपाठान्तरम् ।

ईहितविशेषनिर्णयोऽवायः ॥ ९ ॥

सएवदृढतमावस्थापन्नोधारणा ॥ १० ॥

संशयपूर्वकत्वादीहायाः संशयाद्भेदः ॥ ११ ॥

कथञ्चिदभेदेपिपरिणामविशेषादेषां व्यपदेशभेदः ॥ १२ ॥

असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतया ऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥ १३ ॥

क्रमोप्यमीषामयमेव तथैवसंवेदनात् ॥ १४ ॥

एवंक्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्च ॥ १५ ॥

अन्यथाप्रमेयानवगतिप्रसङ्गः ॥ १६ ॥

तथाहि नखल्वदृष्टमवगृह्यते नचानवगृहीतं-

सन्दिह्यते नचासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेतं धार्यते ॥ १७॥

क्वचित् क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १८॥

पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् १९॥

तद्विकलं सकलं च ॥ २० ॥

तत्र विकलमवधिमनःपर्यायज्ञानरूपतया-द्वेधा ॥ २१ ॥

अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम्॥२२॥

संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनः पर्यायज्ञानम् ॥ २३ ॥

सकलंतु सामग्रीविशेषतः समुद्भूतसमस्ताव-

रणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारि-
स्वरूपं केवलज्ञानम् ॥२४॥

तद्वानर्हन्निर्दोषत्वात् ॥ २५॥

निर्दोषोसौ प्रमाणाविरोधिवाक्त्वात्॥२६॥

तदिष्टस्यप्रमाणेनाबाध्यमानत्वात् तद्वा-
चस्तेनाविरोधसिद्धिः ॥ २७॥

नच कवलाहारवत्वेन तस्यासर्वज्ञत्वं कवला-
हारसर्वज्ञत्वयोराविरोधात् ॥ २८॥

इतिप्रत्यक्षस्वरूपनिर्णयोनाम द्वितीयः
परिच्छेदः ॥ २ ॥

---

## अथ तृतीयः परिच्छेदः

:o:

अस्पष्टं परोक्षंस्मरणप्रत्यभिज्ञानतर्कानुमा-
नागमभेदतस्तत्पञ्चप्रकारं तत्रसंस्कारप्र-

बोधसंभूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम् ॥ १ ॥

तत्तीर्थकरबिम्बमिति यथा ॥ २ ॥

अनुभवस्मृतिहेतुकं तिर्यगूर्द्ध्वतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम् ३

यथा तज्जातीयएवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि ॥ ४ ॥

उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनामिदमास्मिन् सत्येवभवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ॥ ५ ॥

यथा यावान् कश्चित्धूमःस सर्वोवह्नौसत्येवभवतीति तस्मिन्नसत्यसौ नभवत्येवेति ६॥

अनुमानं द्विप्रकारं स्वार्थं परार्थं च ॥७ ॥

तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्य-विज्ञानं स्वार्थम् ॥ ८ ॥

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ९ ॥

नतु त्रिलक्षणकादिः ॥ १० ॥

तस्य हेत्वाभासस्यापि सम्भवात् ॥ ११ ॥

अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १२ ॥

शङ्कितविपरीतानध्यवसितवस्तूनां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥ १३ ॥

प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यतामित्यनिराकृतग्रहणम् ॥ १४ ॥

अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानम् ॥ १५ ॥

व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्यथा तदनुपपत्तेः ॥ १६ ॥

नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥ १७॥

आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धोधर्म्मी ॥१८॥

धर्म्मिणः प्रसिद्धिः क्वचिद्विकल्पतः कुत्रचित्प्रमाणतःक्वापि विकल्पप्रमाणाभ्याम् १९

यथा समस्तिसमस्तवस्तुवेदी क्षितिधरकन्धरेयंधूमध्वजवती ध्वनिः परिणतिमानिति२०॥

पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ॥२१॥

साध्यस्य प्रतिनियतधर्म्मिसंबन्धिता प्रसिद्धये हेतोरुपसंहारवचनवत्पक्षप्रयोगोप्यवश्यमाश्रयितव्यः ॥२२॥

त्रिविधं साधनमभिधायैव तत्समर्थनं विद-

धानः कः खलु न पक्षप्रयोगमङ्गीकुरुते॥२३॥

प्रत्यक्षपरिच्छिन्नार्थाभिधायिवचनं परार्थं प्रत्यक्षं परप्रत्यक्षहेतुत्वात् ॥ २४ ॥

यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति२५॥

पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनम् ॥ २६ ॥

हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः ॥ २७ ॥

सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः। असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः२८

यथा कृशानुमानयंपाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति२९

अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यैकत्रानुपयोगः ॥ ३० ॥

न दृष्टान्तवचनं परप्रतिपत्तये प्रभवति तस्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ३१

न च हेतोरन्यथानुपपत्तिनिर्णीतये यथोक्ततर्कप्रमाणादेव तदुपपत्तेः ॥ ३२ ॥

नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षायामनवस्थितेर्दुर्निवारः समवतारः ॥ ३३ ॥

नाप्यविनाभावस्मृतये प्रतिपन्नप्रतिबन्धस्यव्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः

अन्तर्व्याप्त्या हेतोःसाध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥ ३५॥

पक्षीकृतएवविषये साधनस्य साध्येन व्याप्ति-

रन्तर्व्याप्तिरन्यत्र तु बहिर्व्याप्तिः यथाऽनैका-
न्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः । अग्नि-
मानयं देशो धूमवत्त्वात् य एवं स एवं
यथा पाकस्थानम् ॥ ३६ ॥

नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं-
पक्षहेतुप्रयोगादेव तस्याः सद्भावात् ॥३७॥

समर्थनमेव परं परप्रतिपत्त्यङ्गमास्तां तदन्तरेण
दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥३८॥

मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनि-
गमनान्यपि प्रयोज्यानि ॥३९॥

प्रतिबन्धप्रतिपत्तेरास्पदं दृष्टान्तः ॥४०॥

स द्वेधा साधर्म्यतो वैधर्म्यतश्च ॥४१॥

यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता
प्रकाश्यते स साधर्म्यदृष्टान्तः ॥ ४२ ॥

यथा यत्र धूमस्तत्र वह्निर्यथा महानसः ॥४३॥

यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते सवैधर्म्यदृष्टान्तः ॥ ४४ ॥

यथाग्न्यभावे नभवत्येवधूमो यथा जलाशये४५

हेतोःसाध्यधर्म्मिण्युपसंहरणमुपनयः ॥४६॥

यथा धूमश्चात्र प्रदेशे ॥४७॥

साध्यधर्मस्य पुनर्निगमनम् ॥४८॥

यथा तस्मादग्निरत्र ॥४९॥

एते पक्षप्रयोगादयः पञ्चाप्यवयवसंज्ञया कीर्त्यन्ते ॥५०॥

उक्तलक्षणो हेतुर्द्विप्रकारःउपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५१॥

उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५२॥

विधिः सदंशः प्रतिषेधोऽसदंशः ॥५३॥

सचतुर्द्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥५४॥

यन्निवृत्तावेव कार्यस्यसमुत्पत्तिः सोस्यप्रागभावः ॥५५॥

यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥५६॥

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोस्य प्रध्वंसाभावः ॥५७॥

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥५८॥

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः॥५९

यथा स्तंभस्वभावात् कुंभस्वभावव्यावृत्तिः६०

कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः ॥६१॥

यथा चेतनाऽचेतनयोः ॥६२॥

उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च ॥ ६३ ॥

तत्राऽविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ६४॥

साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति॥६५॥

तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यञ्च ६६

पूर्वचरोत्तरचरयोर्नस्वभावकार्यकारणभावौ तयोः कालव्यवहितावनुपलम्भात्॥ ६७ ॥

नचातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोःप्रबोधोत्पातौ प्रति कारणत्वं व्यवहि-

तत्त्वेन निर्व्यापारत्वात् ॥६८॥

स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रति ॥ ६९ ॥

नच व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेः ॥ ७० ॥

परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥ ७१ ॥

सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेनतदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः॥७२

ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वात् यः प्रयत्नानन्तरीयकः स परिणतिमान् यथा स्तम्भो यो वा न परिणतिमान् स न प्रयत्नान-

न्तरीयको यथा वान्ध्येयः प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येणच ॥ ७३ ॥

अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्य ॥ ७४ ॥

भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्य ॥ ७५ ॥

उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्य ॥ ७६ ॥

उदगुर्मुहूर्त्तात्पूर्वंपूर्वफल्गुन्य उत्तरफल्गुनीनामुद्गमोपलब्धेरित्युत्तरचरस्य ॥ ७७ ॥

अस्तीह सहकारफले रूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्य ॥ ७८ ॥

विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्त-
प्रकारा ॥ ७९ ॥

तत्राद्या स्वभावविरुद्धोपलब्धिर्यथा ॥८०॥

नास्त्येव सर्वथैकान्तोनेकान्तस्योपलम्भात् ८१

प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षट् ८२

विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्त
त्त्वेषु निश्चयस्तत्रसन्देहात् ॥ ८३ ॥

विरुद्धकार्योपलब्धिर्यथा न विद्यते ऽस्य क्रो-
धाद्युपशान्तिर्वदनविकारादेः ॥ ८४ ॥

विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं
वचः समस्तिरागद्वेषकालुष्याकलङ्कितज्ञा-
नसंपन्नत्वात् ॥ ८५ ॥

विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति
मुहूर्तान्ते पुष्यतारा रोहिण्युद्गमात् ॥ ८६ ॥

विरुद्धोत्तरचरोपलब्धिर्यथा नोदगात् मुहूर्त्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयात् ॥८७॥

विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनात् ॥ ८८ ॥

अनुपलब्धेरपि द्वैरूप्यमविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च ॥ ८९ ॥

तत्राविरुद्धानुपलब्धिः प्रतिषेधावबोधे सप्तप्रकारा ॥ ९० ॥

प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिरिति ॥ ९१ ॥

स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥ ९२ ॥

व्यापकानुपलब्धिर्यथा नास्त्यत्रप्रदेशे प-
नसः पादपानुपलब्धेः ॥ ९३ ॥

कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्ति
कं बीजमङ्कुरानवलोकनात् ॥ ९४ ॥

कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्र-
भृतयो भावास्तत्त्वार्थश्रद्धानाभावात् ॥९५॥

पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्ता-
न्ते स्वातिनक्षत्रं चित्रोदयादर्शनात् ॥९६॥

उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभ-
द्रपदा मुहूर्तात्पूर्वमुत्तरभद्रपदोद्गमानवग-
मात् ॥ ९७ ॥

सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञा-
नं सम्यग्दर्शनानुपलब्धेः ॥ ९८ ॥

विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा ९९

विरुद्धकार्यकारणस्वभावव्यापकसहचरा-
नुपलम्भभेदात् ॥ १०० ॥

विरुद्धकार्यानुपलब्धिर्यथाऽत्रशरीरिणि रो-
गातिशयः समस्ति निरोगव्यापारानुपल-
ब्धेः ॥ १०१ ॥

विरुद्धकारणानुपलब्धिर्यथा विद्यते ऽत्र प्रा-
णिनि कष्टमिष्टसंयोगाभावात् ॥१०२॥

विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमने-
कान्तात्मकमेकान्तस्वभावानुपलम्भात् १०३

विरुद्धव्यापकानुपलब्धिर्यथा ऽस्त्यत्र च्छा-
या औष्ण्यानुपलब्धेः ॥ १०४ ॥

विरुद्धसहचरानुपलब्धिर्यथा ऽस्त्यस्य मि-
थ्याज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०५॥

इतिस्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूप-
निर्णयोनामतृतीयः परिच्छेदः ॥ ३ ॥

आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ॥ १ ॥

उपचारादाप्तवचनञ्च ॥ २ ॥

यथा समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्नसानुप्रभृतयः ॥ ३ ॥

अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञातञ्चाभिधत्ते स आप्तः ॥ ४ ॥

तस्य हि वचनमविसंवादि भवति ॥ ५ ॥

स च द्वेधा लौकिको लोकोत्तरश्च ॥ ६ ॥

लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादिः ॥ ७ ॥

वर्णपदवाक्यात्मकं वचनम् ॥ ८ ॥

अकारादिः पौद्गलिको वर्णः ॥ ९ ॥

वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदं पदानान्तु वाक्यम् ॥ १० ॥

स्वभाविकसामर्थ्यसमयाभ्यामर्थबोधनिब-न्धनं शब्दः ॥ ११॥

अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवत यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनु-सरतः ॥ १२ ॥

सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थम-भिदधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥

एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादवि-रोधेन व्यस्तयोःसमस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितःसप्तधावाक्प्रयो-गः सप्तभङ्गी ॥ १४ ॥

तद्यथा स्यादस्त्येव सर्वमिति विधिकल्पन-या प्रथमोभङ्गः ॥ १५ ॥

स्यान्नास्त्येव सर्वमितिनिषेधकल्पनया द्वि-तीयः ॥ १६ ॥

स्यादस्त्येव स्यान्नास्त्येवेति क्रमतोविधिनिषेधकल्पनया तृतीयः ॥ १७॥

स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ॥ १८ ॥

स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः १९

स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः २०

स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतोविधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमइति ॥ २१ ॥

विधिप्रधानएव ध्वनिरिति न साधु ॥२२॥

निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥२३ ॥

अप्राधान्येनैव ध्वनिस्तमभिधत्तइत्यप्यसारम्२४

कश्चित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिप-
न्नस्य तस्याप्राधान्यस्याऽनुपपत्तेः ॥ २५ ॥

निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्याया-
दपास्तम् ॥ २६ ॥

क्रमादुभयप्रधान एवायमित्यपि न साधीयः २७

अस्य विधिनिषेधाऽन्यतरप्रधानत्वानुभव-
स्याप्यबाध्यमानत्वात् ॥ २८ ॥

युगपद्विधिनिषेधात्मनो ऽर्थस्यावाचक ए-
वासौ इतिवचो न चतुरस्रम् ॥ २९ ॥

तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ३०

विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनोयु
गपदवाचकएव स इत्येकान्तोपिनकान्तः ३१

निषेधात्मनः सहद्वयात्मनश्चार्थस्य वाचक-
त्वावाचकत्वाभ्यामपिशब्दस्य प्रतीयमान-
त्वात् ॥ ३२ ॥

निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्म-
नो युगपद्वाचक एवायमित्यप्यवधारणं न
रमणीयम् ॥ ३३ ॥

इतरथापि संवेदनात् ॥ ३४ ॥

क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाच-
कश्चावाचकश्च ध्वनिर्नान्यथा इत्यपि
मिथ्या ॥ ३५ ॥

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ३६

एकत्र वस्तुनि विधीयमाननिषिध्यमानान-
न्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतै-
व सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तू-
न्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ३८

प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्ता-

नामेव संभवात् ॥ ३९ ॥

तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

तस्या ऽपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्याऽपिसप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥ ४२ ॥

इयंसप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥

प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनःकालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचःसकलादेशः ४४

तद्विपरीतस्तु विकलादेशः ॥ ४५ ॥

तद्धि भेदमपिप्रमाणमात्मीयप्रतिबन्धकाप-

गमविशेषस्वरूपसामर्थ्यतः प्रतिनियतम-
र्थमवद्योतयति ॥ ४६ ॥

नतदुत्पत्तितदाकारताभ्यां तयोःपार्थ्यक्ये-
न सामस्त्येन च व्यभिचारोपलम्भात्॥४७॥

इति आगमाख्यप्रमाणस्वरूपनिर्ण
योनामचतुर्थः परिच्छेदः ४

तस्य विषयः सामान्यविशेषाद्यनेकान्तात्म-
कं वस्तु ॥ १ ॥

अनुगतविशिष्टाकारप्रतीतिविषयत्वात् प्रा-
चीनोत्तराकारपरित्यागोपादानावस्थान-
स्वरूपपरिणत्यार्थक्रियासामर्थ्यघटनाच्च २

सामान्यं द्विप्रकारं तिर्यक्सामान्यमूर्द्धता-
सामान्यञ्च ॥ ३ ॥

प्रतिव्यक्तितुल्यापरिणतिस्तिर्यक्सामान्यं शवलशावलेयादिपिण्डेषु गोत्वं यथा॥४॥

पूर्वापरपरिणामसाधारणंद्रव्यमूर्द्धतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवत् ।.५॥

विशेषोपि द्विरूपो गुणः पर्यायश्च ॥ ६ ॥

गुणः सहभावीधर्मो यथात्मनि विज्ञानव्यक्तिशक्त्यादिः ॥ ७ ॥

पर्यायस्तूक्रमभावी यथातत्रैवसुखदुःखादिः८

इतिविषयस्वरूपनिर्णयोनामपञ्चमः परिच्छेदः ।

---

यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥ १ ॥

तद्द्विविधमानन्तर्येण पारम्पर्येण च ॥ २ ॥

तत्राऽऽनन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥ ३ ॥

पारम्पर्येण केवलज्ञानस्य तावत्फलमौदा-
सीन्यम् ॥ ४ ॥

शेषप्रमाणानां पुनरुपादानहानोपेक्षाबु-
द्धयः ॥ ५ ॥

तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफ-
लत्वान्यथानुपपत्तेः ॥ ६ ॥

उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यव-
हितफलेन हेतोर्व्यभिचार इति न विभाव-
नीयम् ॥ ७ ॥

तस्यैकप्रमातृतादात्म्येन प्रमाणादभेद-
व्यवस्थितेः ॥ ८ ॥

प्रमाणतया परिणतस्यैवात्मनः फलतया प-
रिणतिप्रतीतेः ॥ ९ ॥

यः प्रमिमीते स एवोपादत्ते परित्यजत्युपेक्ष-

ते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् ॥ १० ॥

इतरथा स्वपरयोः प्रमाणफलव्यवस्थाविप्लवः प्रसज्येत ॥ ११ ॥

अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्तइति नाशङ्कनीयम् ॥ १२ ॥

कथञ्चित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानात् १३

साध्यसाधनभावेन प्रमाणफलयोःप्रतीयमानत्वात् ॥ १४ ॥

प्रमाणंहि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वात् ॥ १५ ॥

स्वपरव्यवसितिक्रियारूपाऽज्ञाननिवृत्त्याख्यं फलंतु साध्यं प्रमाणनिष्पाद्यत्वात् ॥ १६ ॥

प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथ-
ञ्चिद्भेदः ॥ १७॥

कर्तृक्रिययोःसाध्यसाधकभावेनोपलम्भात् ॥
कर्त्ता हि साधकः स्वतन्त्रत्वात् क्रियातु सा-
ध्या कर्तृनिर्वर्त्यत्वात् ॥१९॥

न च क्रियाक्रियावतः सकाशादभिन्नैव
भिन्नैव वा प्रतिनियतक्रियाक्रियावद्भावभङ्ग-
प्रसङ्गात् ॥ २० ॥

संवृत्या प्रमाणफलव्यवहार इत्यप्रामाणिक-
प्रलापः परमार्थतः स्वाभिमतसिद्धिविरो-
धात् ॥ २१ ॥

ततः पारमार्थिक एव प्रमाणफलव्यवहारः
सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्यः।२२।
प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीतं तदा-

भासम् ॥ २३ ॥

अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ॥ २४ ॥

यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसंशयानध्यवसायाः ।

तेभ्यः स्वपरव्यवसायस्यानुपपत्तेः ॥ २६ ॥

सांव्यवहारिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २७ ॥

यथाऽम्बुधरेषु गन्धर्वनगरज्ञानं दुःखे सुखज्ञानञ्च ॥ २८ ॥

पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २९ ॥

यथा शिवाख्यस्य राजर्षेरसंख्यातद्वीपसमु-

द्वेषु सप्तद्वीपसमुद्रज्ञानम् ॥ ३० ॥

अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभासम् ॥ ३१ ॥

अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथा

तुल्ये पदार्थे स एवायमित्येकस्मिंश्च तेन तुल्य इत्यादिज्ञानं प्रत्यभिज्ञाभासम् ॥ ३३ ॥

यमलकजातवत् ॥ ३४ ॥

असत्यामपि व्याप्तौ तदवभासस्तर्काभासः ३५

सश्यामो मैत्रतनयत्वात् इत्यत्र यावान् मैत्रतनयः सश्यामः इति यथा ॥ ३६ ॥

पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमवसेयम् ॥ ३७ ॥

तत्र प्रतीतानिराकृतानभीप्सितसाध्यधर्मविशेषणास्त्रयः पक्षाभासाः ॥ ३८ ॥

प्रतीतसाध्यधर्म्मविशेषणो यथार्हतान् प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्तिजीव इत्यादि ॥३९॥

निराकृतसाध्यधर्मविशेषणः प्रत्याक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य निराकरणादनेकप्रकारः ॥ ४० ॥

प्रत्यक्षनिराकृतसाध्यधर्म्मविशेषणो यथा नास्तिभूतविलक्षणआत्मा ॥ ४१ ॥

अनुमाननिराकृतसाध्यधर्मविशेषणो यथा नास्ति सर्वज्ञो वीतरगो वा ॥४२॥

आगमनिराकृतसाध्यधर्मविशेषणो यथा जैनै रजनिभोजनं भजनीयम् ॥४३॥

लोकनिराकृतसाध्यधर्म्मविशेषणो यथा नापारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥४४॥

स्ववचननिराकृतसाध्यधर्म्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदकं प्रमाणम् ॥४५॥

अनभीप्सितसाध्यधर्म्मविशेषणो यथा स्याद्वादिनः शाश्वतिक एव कलशादिरशाश्वतिक एवेति वदतः ॥४६॥

असिद्धविरुद्धानैकान्तिकास्त्रयोहेत्वाभासाः ॥ ४७ ॥

यस्यान्यथानुपपत्तिः प्रमाणेन न प्रतीयते सोऽसिद्धः ॥४८॥

सद्विविध उभयासिद्धोऽन्यतरासिद्धश्च ४९

उभयासिद्धो यथा परिणामी शब्दश्चाक्षुषत्वात् ॥५०॥

अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ५१

साध्यविपर्ययेणैव यस्यान्यथानुपपत्तिरध्यव-सीयते स विरुद्धः ॥५२॥

यथा नित्यएव पुरुषोऽनित्यएव वा प्रत्यभि ज्ञानादिमत्वात् ॥५३॥

यस्यान्यथानुपपत्तिः सन्दिह्यते सोऽनैका-न्तिकः ॥ ५४ ॥

सद्वेधा निर्णीतविपक्षवृत्तिकः सन्दिग्ध-विपक्षवृत्तिकश्च ॥ ५५ ॥

निर्णीतविपक्षवृत्तिको यथा नित्यः शब्दः प्रमेयत्वात् ॥५६॥

सन्दिग्धविपक्षवृत्तिको यथा विवादापन्नः पुरुषः सर्वज्ञो न भवति वक्तृत्वात् ॥५७॥

साधर्म्येण दृष्टान्ताभासोनवप्रकारः ॥५८॥

साध्यधर्मविकलः साधनधर्मविकलः उभ-

यधर्म्मविकलः सन्दिग्धसाध्यधर्म्मा सन्दि-
ग्धसाधनधर्म्मा सन्दिग्धोभयधर्म्मानन्व-
योऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ५९।

तत्रापौरुषेयः शब्दोऽमूर्त्तत्वाद्दुःखवदिति
साध्यधर्म्मविकलः ॥ १ ॥ ६० ॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमा-
णुवदिति साधनधर्म्मविकलः ॥ १॥६१॥

कलशवदित्युभयधर्म्मविकलः ॥ १ ॥ ६२॥

रागादिमानयं वक्तृत्वाद्देवदत्तवदिति स-
न्दिग्धसाध्यधर्मा ॥ ३ ॥ ६३ ॥

मरणधर्मायं रागादिमत्त्वान् मैत्रवदिति सं-
दिग्धसाधनधर्मा ॥ ५ ॥६४॥

नायं सर्वदर्शी रागादिमत्त्वान्मुनिविशेष-
वदिति सन्दिग्धोमयधर्मा । ६ । ६५ ॥

रागादिमान् विवक्षितः पुरुषोवक्तृत्वादिष्ट-
पुरुषवदित्यनन्वयः । ७ । ६६ ॥

अनित्यः शब्दः कृतकत्वात् घटवदित्य-
प्रदर्शितान्वयः । ८ । ६७ ॥

अनित्यः शब्दः कृतकत्वात् यदनित्यं
तत् कृतकं घटवदिति विपरीतान्वयः।९।६८॥
वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥६९॥
असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यति-
रेकोऽसिद्धोभयव्यतिरेकः सन्दिग्धसाध्य-
व्यतिरेकः सन्दिग्धसाधनव्यतिरेकः सन्दि-
ग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्य-
तिरेको विपरीतव्यतिरेकश्च ॥ ७० ॥

तेषु भ्रान्तमनुमानं प्रमाणत्वात्यत्पुनर्भ्रान्तं
न भवति न तत् प्रमाणं यथा स्वप्नज्ञानमिति

असिद्धसाध्यव्यतिरेकः स्वप्न ज्ञानात् भ्रान्त त्वस्यानिवृत्तेः । १ । ७१ ॥

निर्विकल्पकं प्रत्यक्षं प्रमाणत्वाद्यत्तु सविकल्पकं न तत्प्रमाणं यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः । २ । ७२ ॥

नित्यानित्यःशब्दः सत्वात् यस्तु न नित्यानित्यः सनसंस्तद्यथा स्तम्भ इत्यसिद्धोभयव्यतिरेकः स्तम्भान्नित्यान्नित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः । ३ । ७३ ॥

असर्वज्ञोऽनाप्तो वा कपिलोऽक्षीणकैकान्तवादित्वाद्यः सर्वज्ञ आप्तो वा सक्षणिकैकान्तवादी यथासुगत इति सान्दिग्धसाध्यव्यतिरेकः सुगतेऽसर्वज्ञतानाप्तत्वयोः साध्य-

धर्म्मिणोर्व्यावृत्तेः सन्देहात् । ४ । ७४ ॥

अनादेयवचनः कश्चिद्विवक्षितः पुरुषो रागा-दिमत्त्वात्। यः पुनरादेयवचनः स वीतराग-स्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधन-व्यतिरेकः शौद्धोदनौ रागादिमत्त्वस्य निवृत्तेः संशयात् । ७५॥५॥

नवीतरागः कपिलः करुणास्पदेष्वपि परम-कृपयाऽनर्पितनिजपिशितशकलत्वात् य-स्तुवीतरागः सकरुणास्पदेषुपरमकृपया स-मर्पितनिजपिशितशकलस्तद्यथातपनबन्धु-रितिसन्दिग्धोभयव्यतिरेकः तपनबन्धौवीत-रागत्वाभावस्य करुणास्पदेष्वपि परमकृपया-नर्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् । ६ ॥ ७६ ॥

न वीतरागः कश्चिद्विवक्षितः पुरुषोवक्तृत्वात् यः पुनर्वीतरागो न स वक्ता यथोपलखण्डइत्यव्यतिरेकः । ७७ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वादाकाशवदित्यप्रदर्शितव्यतिरेकः । ७८ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वाद्यदकृतकं तन्नित्यं यथाकाशमिति विपरीतव्यतिरेकः ।७९॥३॥

उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने तदाभासौ ॥ ८० ॥

यथापरिणामीशब्दः कृतकत्वाद्यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति च ८१।

तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्द-इति तस्मात्परिणामी कुम्भ इति वा ॥८२॥

अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ।८३।
यथा मेकलकन्यकायाः कूले तालहिंताल-
योर्मूलेसुलभाः पिण्डखर्जूराः सन्तित्वरितं
गच्छत २ शावकाः ॥ ८४ ॥

प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्यानं
तस्य संख्याभासम् ॥ ८५ ॥

सामान्यमेव विशेषएव तद्द्वयं वा स्वतन्त्र-
मित्यादिस्तस्य विषयाभासः ॥ ८६ ॥

अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य
तदाभासम् ॥ ८७ ॥

इति फलप्रमाणस्वरूपाद्याभासनिर्णयोनाम
षष्ठः परिच्छेदः ॥ ६ ॥

नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थ-
स्यांशस्तदितरांशौदासीन्यतः सप्रतिपत्तुर-
भिप्रायविशेषोनयः ॥ १ ॥

स्वाभिप्रेतादंशादितरांशापलापी पुनर्नया-
भासः ॥ २ ॥

सव्याससमासाभ्यान्द्विप्रकारः ॥ ३ ॥

व्यासतोऽनेकविकल्पः ॥ ४ ॥

समासतस्तुद्विभेदो द्रव्यार्थिकः पर्यायार्थि-
कश्च ॥ ५ ॥

आद्यो नैगमसंग्रहव्यवहारभेदात्त्रेधा ॥६॥

धर्म्मयोर्धर्म्मिणोर्धर्म्मधर्म्मिणोश्चप्रधानोप-
सर्जनभावेन यद्विवक्षणं सनैकगमोनै-
गमः ॥ ७ ॥

सच्चैतन्यमात्मनीतिधर्म्मयोः ॥ ८ ॥

वस्तुपर्यायवद्द्रव्यं इति धर्म्मिणोः ॥ ९ ॥
क्षणमेकं सुखी विषयासक्तजीवइति धर्म-
धर्म्मिणोः ॥ १० ॥

धर्म्मद्वयादीनामैकान्तिकपार्थक्याभिसन्धि-
नैगमाभासः ॥ ११ ॥
यथात्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग्
भूते इत्यादि ॥ १२ ॥

सामान्यमात्रग्राही परामर्शः संग्रहः ॥१३॥
अयमुभयविकल्पः परोऽपरश्च ॥ १४ ॥
अशेषविशेषेष्वौदासीन्यम्भजमानः शुद्ध-
द्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः १५
विश्वमेकं सदाविशेषादिति यथा ॥ १६ ॥
सत्ताद्वैतं स्वीकुर्वाणः सकलविशेषान्निरा-
चक्षाणस्तदाभासः ॥ १७ ॥

यथासत्तैव तत्त्वन्ततः पृथग्भूतानां विशेष-
णामदर्शनात् ॥ १८ ॥

द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वा-
नस्तद्भेदेषु गजनिमीलिकामवलम्बमानः
पुनरपरसंग्रहः ॥ १९ ॥

धर्माधर्माकाशकालपुद्गलजीवद्रव्याणा-
मैक्यं द्रव्यत्वाभेदादित्यादिर्यथा ॥ २० ॥

द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नु-
वानस्तदाभासः ॥ २१ ॥

यथा द्रव्यत्वमेव तत्त्वं ततोऽर्थान्तरभूतानां
द्रव्याणामनुपलब्धेः ॥ २२ ॥

संग्रहेण गोचरीकृतानामर्थानां विधिपूर्व-
कमवहरणं येनाभिसन्धिना क्रियते स व्य-
वहारः ॥ २३ ॥

यथा यत्सत्तद्द्रव्यं पर्यायवेत्यादि ॥२४॥

यः पुनरपारमार्थिकद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः ॥ २५॥

यथा चार्वाकदर्शनम् ॥ २६ ॥

पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ॥ २७ ॥

ऋजुवर्त्तमानक्षणस्थायिपर्यायमात्रंप्राधान्यतः सूत्रयन्नभिप्राय विशेष ऋजुसूत्रः ॥ २८ ॥

यथासुखविवर्त्तः सम्प्रत्यस्तीत्यादि ॥२९॥

सर्वथाद्रव्यापलापीतदाभासः ॥ ३० ॥

यथा तथागतमतम् ॥ ३१ ॥

कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः ॥ ३२ ॥

यथा बभूव भवति भविष्यति सुमेरुरित्यादिः।

तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः ३४

यथा बभूव भवति भविष्यति सुमेरुरित्यादयोभिन्नकालः शब्दाभिन्नमेवार्थमभिदधति भिन्नकालशब्दत्वात्तादृक्सिद्धान्यशब्दवदित्यादिः ॥ ३५ ॥

पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहन्समभिरूढः ॥ ३६ ॥

इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरन्दर इत्यादिषु यथा ॥ ३६ ॥

पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणस्तदाभासः ॥ ३७ ॥

यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दाभिन्नाभिधेयाएव भिन्नशब्दत्वात् करिकुरङ्गतुरङ्गशब्दवदित्यादिः ॥ ३८ ॥

शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियावि-
ष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ।३९।
यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः
शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ।४०।
क्रियानाविष्टं वस्तुशब्दवाच्यतया प्रतिक्षिपं-
स्तुतदाभासः ॥ ४२ ॥

यथाविशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घट-
शब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रि-
याशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥
एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थ-
नयाः शेषास्तुत्रयः शब्दवाच्यार्थगोचरतया
शब्दनयाः ॥ ४४ ॥
पूर्वः पूर्वोनयः प्रचुरगोचरः परः परस्तु परि-
मितविषयः ॥ ४५ ॥

सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभू-
मिकत्वात् भूमविषयः ॥ ४६ ॥

सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्त-
सत्समूहोपदर्शकत्वात्बहुविषयः ॥ ४७ ॥

वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकाल-
विषयावलम्बित्वादनल्पार्थः ॥ ४८ ॥

कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृ-
जुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥ ४९ ॥

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभि-
रूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूत-
विषयः ॥ ५० ॥

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभू-
तात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महा
गोचरः ॥ ५१ ॥

नयवाक्यमपिस्वविषये प्रवर्त्तमानं विधि-प्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५२ ॥

प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥५३॥

प्रमाताप्रत्यक्षादिप्रसिद्धआत्मा ॥ ५४ ॥

चैतन्यस्वरूपः परिणामीकर्त्ता साक्षाद्भोक्ता-स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलि-कादृष्टवांश्चायम् ॥ ५५ ॥

तस्योपात्तपुंस्त्रीशरीरस्य सम्यग्ज्ञानक्रियाभ्यां कृत्स्नकर्मक्षयस्वरूपासिद्धिः ॥ ५६ ॥

इति श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्वा-लोकालङ्कारेनयात्मस्वरूपानिर्णयो नाम सप्तमः परिच्छेदः ॥ ७ ॥

अष्टमः परिच्छेदः ।

विरुद्धयोर्धर्म्मयोरेकधर्म्मव्यवच्छेदेनस्वीकृततदन्यधर्म्मव्यवस्थापनार्थं साधनदूषणवचनं वादः ॥ १ ॥

प्रारम्भकश्चात्र विजिगीषुस्तत्त्वनिर्णिनीषुश्च

स्वीकृतधर्मव्यवस्थापनार्थं साधनदूषणाभ्यां परं पराजेतुमिच्छुर्जिगीषुः॥ ३ ॥

तथैव तत्त्वंप्रतितिष्ठापयिषुस्तत्त्वनिर्णिनीषुः४

अयं च द्वेधा स्वात्मनि परत्र च ॥५ ॥

आद्यः शिष्यादिः ॥ ६ ॥

द्वितीयोगुर्वादिः ॥ ७ ॥

अयं द्विविधः क्षायोपशमिकज्ञानशाली केवली च ॥ ८ ॥

एतेन प्रत्यारम्भकोपि व्याख्यातः ॥ ९ ॥

तत्र प्रथमे प्रथमतृतीयतुरीयाणां चतुरङ्गए-

वान्यतमस्याप्यङ्गस्यापाये जयपराजयव्यव-
स्थादिदौस्थ्यापत्तेः ॥१०॥

द्वितीये तृतीयस्य कदाचिद्व्यङ्गः कदाचित्त्र्यङ्गः
तत्रैव द्व्यङ्गस्तुरीयस्य ॥१२॥

तृतीये प्रथमादीनां यथायोगं पूर्ववत् ॥१३॥

तुरीये प्रथमादीनामेवम् ॥१४॥

वादिप्रतिवादिसभ्यसभापतयश्चत्वार्य्यङ्गानि

प्रारम्भकप्रत्यारम्भकावेव मल्लप्रतिमल्ल-
न्यायेन वादिप्रतिवादिनौ ॥ १६ ॥

प्रमाणतः स्वपक्षस्थापनप्रतिपक्षप्रतिक्षेपाव-
नयोः कर्म्म ॥१७॥

वादिप्रतिवादिसिद्धान्ततत्त्वनदीष्णत्वधार-
णाबाहुश्रुत्यप्रतिभाक्षान्तिमाध्यस्थैरुभयाभि-
मताःसभ्याः ॥ १८ ॥

वादिप्रतिवादिनोर्यथायोगं वादस्थानक-
कथाविशेषाङ्गीकारेणाग्रवादोत्तरवादनिर्देशः
साधकबाधकोक्तिगुणदोषावधारणं यथा-
वसरन्तत्त्वप्रकाशनेन कथाविरमणं यथासंभ-
वं सभायांकथाफलकथनं चैषांकर्माणि ॥१९॥

प्रज्ञाज्ञैश्वर्यक्षमामाध्यस्थ्यसंपन्नः सभापतिः॥
वादिसभ्याभिहितावधारणकलहव्यपोहादिकं
चास्य कर्म्म ॥२१॥

सजिगीषुकेऽस्मिन्यावत्सभ्यापेक्षं स्फूर्तौवक्त-
व्यम् ॥ २२ ॥

उभयोस्तत्त्वनिर्णिनीषुत्वेयावत्तत्त्वनिर्णयं
यावत्स्फूर्त्तिं च वाच्यम् ॥ २३ ॥

इतिश्रीदेवाचार्यनिर्मितेप्रमाणनयतत्त्वालोका-
लङ्कारेवादिप्रतिवादिन्यायनिर्णयोनामाष्टमः
परिच्छेदः ॥ ८ ॥

श्रीजैनयशोविजयग्रन्थमाला (१)

॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालो-कालङ्कारः ।

श्रीकाशीस्थ न्यायविशारद महामहोपाध्याय
श्रीयशोविजय नामाङ्कित श्वेताम्बर जैन
संस्कृत पाठशालातः प्रादुर्भूतः

काश्यां
चन्द्रप्रभायन्त्रागारे मुद्रितश्च
वीर सं० २४३० सन् १९०४

पायं पायं प्रवचनसुधां प्रीयते या प्रकामं
स्वैरं स्वैरं चरति कृतिनां कीर्तिवल्लीवनेषु
दोग्ध्री कामाननवनवरसैः सा भृशं प्रीणयन्ती
मादृग् वत्सान् जयति जगति श्रीगवीदेवसूरेः
"श्रीरत्नप्रभाचार्यः"

अर्हम्

## प्रस्तावना ।

—:o:—

अथास्यां संसृतिसरण्यां समागत्य सर्वे शरीरिणः शान्तिशकलमप्यनासादयन्तः समयसरीसृपशीर्णाः संसारापारपारावारपारमुपसर्तुमपारयन्तः परमपारमार्थिकपदमपि पुण्यपद्यया प्राप्तुमपारमार्थिकं मन्वानाः क्षोदिष्ठप्रज्ञया सर्वाऽवज्ञया च पाञ्चभौतिकपिण्डप्रेष्ठाः कलिकल्मषकालिमकलङ्कद्राघिष्ठा विषमविषविषयाशीविषदष्टविशीर्णविषस्फेष्ठाः किंवा विषकीटा इव विषयविषभुजो ऽनादिदुर्वासनावासितबुद्धयश्चाहमहमिकामेव परमपुरुषार्थं साधिष्ठमाकलयन्तोवलिताश्च गरिष्ठाहोपुरुषिकया प्रत्यहं पितृवने दीर्घनिद्रासुखमनुभवन्तः क्रियासमभिहारेण ह्रसिष्ठजननीजठरे वसन्तः सांसारिकानेकवंहिष्ठकटुक्लेशपाशिताः सुप्तप्रबुद्धा इव प्रबुद्धसुप्ता इव तिष्ठन्ति ।

तदत्र किं कारणं को हेतुः किं प्रयोजनं कस्मादित्थमिति साम्रेडितप्रश्नावसरे सर्वमेतदविद्याविलाससाम्राज्येनेति वारं वारं वयमुत्तरयामः ।

हंहो त्रिलक्षणशेमुषीका विचक्षणाः ! शुभवन्तोभवन्तः सहृदयहृदयसन्तोषप्रदन्तोषितरसज्ञ रसज्ञा रस ज्ञापितं कर्ण्यतांवहत्किमपि श्वःश्रेयसमिदमाकर्ण्य नीरक्षीरविवेचनविलक्षणचेतनाचातुरीचमत्कारचमत्कृताः सकृदप्योमिति ब्रूयुः ।

अविद्यानिरासार्थमेव प्रयतमानैरस्माभिः श्रीजैनयशोविजयग्रन्थमाला ऽनर्घ्यमणिगणगुम्फिता हारभूतेव भवतां श्रीमतामुपहारीयते ।

तस्यामेकेयं मणीरामायिता प्रमाणनयतत्वालोकालङ्काररूपा सर्वोपरि सुमेरुभूतेव विलसति ।

अमुं ग्रन्थं श्री १०८ सुगृहीतनाम्नोवादिप्रवरदेवसूरेर्मुखाम्भोजनिर्गलितामृतधाराऽऽसारमिव प्रमाणनयतत्वालोकालङ्कारमदृष्टपूर्वं जैनमतमन्तव्यप्रमाणविचारकरं दुर्वादिवादवासनानिर्यातनपरं विलक्षणभङ्गीकं सप्तभङ्गीतरङ्गरिङ्गितं निबन्धं निरीक्ष्य किमिदं कथमिदं कस्येदं कीदृक्षमिदमिति स्वभावेनैव जिज्ञासवः संपत्स्यन्ते तत्त्वग्रहाग्रहग्रहिलाः शास्त्रप्रियाप्रियास्तदत्रावश्यकं किञ्चनोपन्यस्तुम् ।

तत्र प्रथममवधेयं धीमद्धौरेयैस्तत्रभवद्भिः, यत्कस्यापि मतस्य तत्त्वमनाकलय्य खण्डनमण्डनबद्धपरिकरा ये यथा-

ज्ञाताः सलभा इव परिपतन्ति ते लभन्ते न स्वात्माविना शाद्वते किञ्चिदपि भावुकम् ।

श्रीवादिदेवसूरिभगवतोऽन्तेवासी श्रीरत्नप्रभसूरिर्वसुलोकार्क १२३८ मिते विक्रमाब्दे निजानिर्मितोपदेशमालाटीकायामेवं व्यलेखीत् ।

शिष्यः श्रीमुनिचन्द्रसूरिमुनिभिर्गीतार्थचूडामणिः
पट्टे स्वे विनिवेशितस्तदनु स श्रीदेवसूरिप्रभुः ।
अस्थाने जयसिंहदेवनृपतेर्येनास्तादिग्वाससा
स्त्रीनिर्वाणसमर्थनेन विजयस्तम्भः समुत्तम्भितः ॥

तत्पट्टप्रभवोभवन्नथ गुणग्रामाभिरामोदयाः
श्रीभद्रेश्वरसूरयः शुचिधियस्तन्मानसप्रीतये ।
श्रीरत्नप्रभसूरिभिः शुभकृते श्रीदेवसूरिप्रभोः
शिष्यैः सेयमकारि संमदकृते वृत्तिर्विशेषार्थिनाम् ॥

तथा च ।

विक्रमाद् वसुलोकार्क १२३८ वर्षे माघे समर्थिता
एकादश सहस्राणि मानं सार्धं शतं तथा ॥११५०

अस्माद् श्रीरत्नप्रभसूरेः समयः स्फुटमेवावभाति–

किञ्च किञ्चिन्न्यूनाधिकः सएव समयस्तदीयगुरोर्देव सूरेरपि चास्मादेवानिर्णेतुं शक्यस्तथापि दुर्बद्धं सुबद्धमिति न्यायेन पुनः प्रमाणान्तरं प्रदर्श्यते ।

श्रीमुनिसुन्दरसूरिणा रसर्तुमनुमिते १४६६ ऽब्दे *गुर्वावल्यामेवं व्यलेखि ।

अष्टहयेशमितेऽब्दे ११७८ विक्रमकालाद्दिवं गतोभगवान् ।
श्रीमुनिचन्द्रमुनीन्द्रो ददातु भद्राणि संघाय ॥ ७१ ॥

तस्मादभूदजितदेवगुरुर्गरीयान्
प्राच्यस्तपः श्रुतिनिधिर्जलधिर्गुणानाम् ।
श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो
वादीश्वरोऽस्तगुणचन्द्रमदोपि बाल्ये ॥ ७२ ॥

येनार्दितश्चतुरसीतिसुवादिलीला-
लब्धोल्लसज्जयरमामदकेलिशाली ।
वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः
श्रीसिद्धभूमिपतिसंसादि पत्तनेऽस्मिन् ॥ ७३ ॥

वेदमुनीशमिते ११७४ ऽब्दे देवगुरुर्जगदनुत्तरोभ्युदितः ।
श्रीमुनिचन्द्रगुरोरिति शिष्या बहवोभवन् विदिताः ७४॥

* रसरसमनुमितवर्षे १४६६ मुनिसुन्दरसूरिणा कृतापूर्वम् ।
मध्यस्थैरवधार्या गुर्वावलीयं जयश्रीद्धा ॥ ८६ ॥

अस्मादपि स्फुटतरः समयोदी पवद्देदीप्यते ।

श्रीपूज्यपाददेवसूरिरेव प्रमाणनयतत्वालोकालङ्कारस्य रत्नाकरनाम्नीं महाव्याख्यां रचितवान् ।

तद् विषयेऽपि गुर्वावल्यां लिखितमस्ति—

**स्याद्वादरत्नाकरतर्कवेधा मुदे स केषां नहि देवसूरिः।**
**यतश्चतुर्विंशतिसूरिशाखं यस्यैव नाम्ना विदितंबभूव ७४**

देवसूरिशिष्यैः श्रीरत्नप्रभसूरिभिर्नातिलघीयसी रत्नाकरावतारिका नाम्नी टीका विनिर्मितास्ति। या मूलटिप्पणपञ्जिकाभिः साहिता मुद्रणालये मुद्रयितुमारब्धा तस्यामेवं लिलेख श्रीरत्नप्रभः ।

**यैरत्र स्वप्रभया दिगम्बरस्यार्पिता परा भूतिः ।**
**प्रत्यक्षं विबुधानां जयन्तु ते देवसूरयोनव्याः ।। ३ ।।**

अस्मादपि स्फुटतमः समयो श्रीधर्मसागरोपाध्यायैस्तपगच्छपट्टावल्यां प्राकाश्यमानीतः । तथा श्रीमुनिचन्द्रसूरिशिष्याः॥ श्रीअजितदेवसूरिवादिश्रीदेवसूरिप्रभृतयः। तत्र वादिश्रीदेवसूरिभिः श्रीमदणहिल्लपुरपत्तने जयसिंहदेवराजस्याऽनेकविद्वज्जनकलितायां सभायां चतुरशीतिवादलब्धजययशसं दिगम्बरचक्रवर्त्तिनं वादलिप्सुं

कुमुदचन्द्राचार्यं वादे निर्जित्य श्रीपत्तने दिगम्बरप्रवेशो निवारितोऽद्यापि प्रतीतः। तथा वि० चतुरधिकद्वादशशत १२०४ वर्षे फलवर्द्धिग्रामे चैत्यबिम्बयोः प्रतिष्ठाकृता तत्तीर्थन्तु सम्प्रत्यपि प्रसिद्धं। तथा आरासणे च श्रीनेमिनाथ-प्रतिष्ठाकृता। चतुरशीति सहस्र ८४००० प्रमाणः स्याद्वादरत्नाकरनामा प्रमाणग्रन्थः कृतः। येभ्यश्च यन्नाम्नैव ख्यातिमत् चतुर्विंशतिसूरिशाखं बभूव। एषां च वि० चतुस्त्रिंशदधिके एकादशशत ११३४ वर्षे जन्म द्विपञ्चाशदधिके ११५२ दीक्षा। चतुःसप्तत्यधिके ११७४ सूरिपदं। षड्विंशत्याधिकद्वादशशत १२२६ वर्षे श्रावणवदिसप्तम्यां ७ गुरौ स्वर्गः।

प्रभावकचरित्रेऽप्येवं श्रीप्रद्युम्नसूरिभिः समयनिर्णयः कृतः।

वेदशिखिशिवे जन्म दीक्षा युग्मशरेश्वरे। वेदाश्वशंकरे वर्षे सूरित्वमभवत्प्रभोः॥ रसयुग्मरवौ वर्षे श्रावणे मासि संगते। कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने॥ मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरन्दरबोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः॥

Similarly, the following passage occurs in "Extracts from the Historical Records of the Jains by Johannes Klatt Ph. D. of Berlin" published in the Indian Antiquary of September 1882:—

A pupil of Munichandra was Dêvasûri, who conquered the Digambara Kumudachandrâchârya in a dispute before Jayasiṁhadêva, king of Aṇahillapurapattana, and thereby hindered the entrance

of the Digambaras into that town. In Saṁ. 1204 Dêvasûri founded a chaitya and raised a *bimba* at Phalavarddhigrâma ( तत्तीर्थं संप्रत्यपि प्रसिद्धं ), and made a Nêminâthapratishṭhâ at Ârâsana. He composed *Syâdvâdaratnâkarâ*, a *pramâṇagrantha*, from whence sprang the *Chaturviṁśatisûriśâkhâ*. Dêvasûri was born Sam. 1134; *dîkshâ* 1152; *sûripada* 1174; *svarga* 1226 Śrâvana vadi 7 Gurau.

श्रीमल्लधारिराजशेखरसूरिणा पञ्जिकाकारेणापि लिखितमस्ति ।

स्याद्वादरत्नाकर इत्यस्ति ग्रन्थोमहत्तमः ।
वादिवृन्दारकश्रीमद्देवसूरिविनिर्मितः ॥ ४ ॥

न्यायशास्त्रस्यायमद्वितीयोग्रन्थः

**अत्राष्टौ परिच्छेदाः सन्ति ।**

तत्र प्रथमपरिच्छेदे–प्रमाणस्वरूपनिर्णयः ।

द्वितीये परिच्छेदे–प्रत्यक्षस्वरूपनिर्णयः ।

तृतीयपरिच्छेदे–स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयः

चतुर्थपरिच्छेदे–आगमाख्यप्रमाणस्वरूपनिर्णयः ।

पञ्चमपरिच्छेदे–विषयस्वरूपनिर्णयः ।

षष्ठपरिच्छेदे–फलप्रमाणस्वरूपाद्याभासनिर्णयः ।

सप्तमपरिच्छेदे–नयात्मस्वरूपनिर्णयः ।

अष्टमपरिच्छेदे—वादिप्रवादिन्यायनिर्णयः ।

एतद्ग्रन्थमुद्रणावसरे पञ्चषाणि पुस्तकानि प्राप्तानि, तेषांमध्ये

१ श्री महामान्यधन्यतम धर्मविजयमुनीन्द्रतो लब्धमेकं पुस्तकम् ।

२ श्री मुनिराज वीरविजयेन दत्तमेकं पुस्तकम् ।

३ श्रीमुनिना अमिविजयेन महाशयेनापिपुस्तकमेकंसमर्पितम् ।

४ श्रीकेशरविजयमुनितोपि पुस्तकमेकं समासादितम् ।

५ भावनगरस्थश्राद्धवर्य्य कुंवरजी आनन्दजी इत्यनेन श्रावकेनात्र महती सहायता दत्ता ।

६ श्रीपं. अम्बादत्तशास्त्रिणां समीपेपुस्तमेकमाप्तम् ।

पूर्वोक्तमहाशयानां भूयांसं परिश्रमं चोपकृतिं च तेषां सप्रश्रयमङ्गीकरोतीयं पाठशाला ।

यद्यपि पूर्वोक्तानि पुस्तकानि दृष्ट्वा शोधितोयं ग्रन्थस्तथापि मनुष्यसहभूर्भ्रान्तिर्दुर्वारा तदत्र दृष्टिदोषात् शीशकाक्षरयोजनदोषाद् वा या काचना ऽशुद्धिर्भवेत् तत्स्वपुस्तके परिमृज्य कृपया पाठशालामपि सूचयेयुः सज्जनाः इतिप्रार्थयते

**काशीस्थजैनयशोविजयसंस्कृतपाठशाला ।**

॥ श्रीः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

## प्रथमः परिच्छेदः ।

रागद्वेषविजेतारं ज्ञातारं विश्ववस्तुनः ।
शक्रपूज्यं गिरामीशं तीर्थेशं स्मृतिमानये ॥ १ ॥

प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते १॥

स्वपरव्यवसायिज्ञानं प्रमाणम् ॥ २ ॥

अभिमतानभिमतवस्तुस्वीकारातिरस्कारक्षमं हि प्रमाणमतोज्ञानमेवेदम् ॥ ३ ॥

नवै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नंत-

स्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतम-
त्वानुपपत्तेः ॥ ४ ॥

नखल्वस्य स्वनिर्णीतौ करणत्वं स्तंभादेरि-
वाचेतनत्वात् नाप्यर्थनिश्चितौ स्वनिश्चि-
तावकरणस्य कुंभादेरिवतत्राप्यकरणत्वात् ५॥

तद्व्यवसायस्वभावं समारोपपरिपन्थित्वात्-
प्रमाणत्वाद्वा ॥ ६ ॥

अतस्मिँस्तदध्यवसायः समारोपः ॥ ७ ॥

सविपर्ययसंशयानध्यवसायभेदात्त्रेधा ॥८॥

विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥ ९ ॥

यथा शुक्तिकायामिदं रजतमिति ॥१०॥

साधकबाधकप्रमाणाभावादनवस्थिता-
नेककोटिसंस्पर्शिज्ञानं संशयः ॥ ११ ॥

यथाऽयं स्थाणुर्वा पुरुषोवेति ॥ १२ ॥

किमित्यालोचनमात्रमनध्यवसायः ॥१३॥

यथागच्छतस्तृणस्पर्शज्ञानम् ॥ १४॥

ज्ञानादन्योऽर्थः परः ॥ १५ ॥

स्वस्य व्यवसायःस्वाभिमुख्येन प्रकाशनं बाह्यस्येवतदाभिमुख्येन करिकलभकमहमात्मनाजानामीति ॥ १६ ॥

कः खलुज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपितत्प्रकारं नाभिमन्येत मिहिरालोकवत् ॥ १७ ॥

ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम् १८॥

तदितरत्त्वप्रामाण्यम् ॥ १९ ॥

तदुभयमुत्पत्तौ परतएव ज्ञप्तौ तु स्वतः परतश्चेति ॥ २० ॥

श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

## अथ द्वितीयः परिच्छेदः

तद्द्विभेदं प्रत्यक्षं च परोक्षं च ॥ १ ॥

स्पष्टं प्रत्यक्षम् ॥ २ ॥

अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥ ३ ॥

तद्द्विप्रकारं सांव्यवहारिकं पारमार्थिकं च॥४॥

तत्राद्यं द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥ ५ ॥

एतद्द्वितयमवग्रहेहावायधारणाभेदादेकश[1]श्चतुर्विकल्पकम् ॥ ६ ॥

विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः ॥ ७ ॥

अवगृहीतार्थविशेषाकाङ्क्षणमीहा ॥ ८ ॥

१ 'एकैकश" इत्यपिपाठान्तरम् ।

ईहितविशेषनिर्णयोऽवायः ॥ ९ ॥

सएवदृढतमावस्थापन्नोधारणा ॥ १० ॥

संशयपूर्वकत्वादीहायाः संशयाद्भेदः ॥ ११ ॥

कथञ्चिदभेदेऽपिपरिणामविशेषादेषां व्यपदेशभेदः ॥ १२ ॥

असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतया ऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥ १३ ॥

क्रमोप्यमीषामयमेव तथैवसंवेदनात् ॥ १४ ॥

एवंक्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्च ॥ १५ ॥

अन्यथाप्रमेयानवगतिप्रसङ्गः ॥ १६ ॥

तथाहि नखल्वदृष्टमवगृह्यते नचानवगृहीतं-

सन्दिह्यते नचासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेतं धार्यते ॥ १७ ॥

क्वचित् क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १८ ॥

पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् १९॥

तद्विकलं सकलं च ॥ २० ॥

तत्र विकलमवधिमनःपर्यायज्ञानरूपतया-द्वेधा ॥ २१ ॥

अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम्॥२२॥

संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनः पर्यायज्ञानम् ॥ २३ ॥

सकलंतुसामग्रीविशेषतः समुद्भूतसमस्ताव-

रणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ॥२४॥

तद्वानर्हन्निर्दोषत्वात् ॥२५॥

निर्दोषोसौ प्रमाणाविरोधिवाक्त्वात्॥२६॥

तदिष्टस्यप्रमाणेनाबाध्यमानत्वात् तद्वाचस्तेनाविरोधसिद्धिः ॥२७॥

नच कवलाहारवत्वेन तस्यासर्वज्ञत्वं कवलाहारसर्वज्ञत्वयोरविरोधात् ॥२८॥

इतिप्रत्यक्षस्वरूपनिर्णयोनाम द्वितीयः परिच्छेदः ॥ २ ॥

## अथ तृतीयः परिच्छेदः

:o:

अस्पष्टं परोक्षं स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चप्रकारं तत्रसंस्कारप्र-

बोधसंभूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम् ॥ १ ॥

तत्तीर्थकरबिम्बमिति यथा ॥ २ ॥

अनुभवस्मृतिहेतुकं तिर्यगूर्द्धतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम् ३

यथा तज्जातीयएवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि ॥ ४ ॥

उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन् सत्येवभवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ॥ ५ ॥

यथा यावान् कश्चिद्धूमःस सर्वोवह्नौसत्येवभवतीति तस्मिन्नसत्यसौ नभवत्येवेति ६॥

अनुमानं द्विप्रकारं स्वार्थं परार्थं च ॥ ७ ॥

तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्य-विज्ञानं स्वार्थम् ॥ ८ ॥

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ९ ॥

नतु त्रिलक्षणकादिः ॥ १० ॥

तस्य हेत्वाभासस्यापि सम्भवात् ॥ ११ ॥

अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १२ ॥

शङ्कितविपरीतानध्यवसितवस्तूनां साध्य-ताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥ १३ ॥

प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यता-मित्यनिराकृतग्रहणम् ॥ १४ ॥

अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सित-पदोपादानम् ॥ १५ ॥

व्याप्तिग्रहणसमयापेक्षया साध्यं धर्मएवान्य-था तदनुपपत्तेः ॥ १६ ॥

नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥ १७ ॥

आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धो धर्म्मी ॥ १८ ॥

धर्म्मिणः प्रसिद्धिः क्वचिद्विकल्पतः कुत्रचित्प्रमाणतः क्वापि विकल्पप्रमाणाभ्याम् १९

यथा समस्ति समस्तवस्तुवेदी क्षितिधरकन्धरेयं धूमध्वजवती ध्वनिः परिणतिमानिति २० ॥

पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ॥ २१ ॥

साध्यस्य प्रतिनियतधर्म्मिसंबन्धिता प्रसिद्धये हेतोरुपसंहारवचनवत्पक्षप्रयोगोप्यवश्यमाश्रयितव्यः ॥ २२ ॥

त्रिविधं साधनमभिधायैव तत्समर्थनं विद-

धानः कः खलु न पक्षप्रयोगमङ्गीकुरुते॥२३॥

प्रत्यक्षपरिच्छिन्नार्थाभिधायिवचनं परार्थं प्रत्यक्षं परप्रत्यक्षहेतुत्वात् ॥ २४ ॥

यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति२५॥

पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनम् ॥ २६ ॥

हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः ॥ २७ ॥

सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः । असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः२८

यथा कृशानुमानयंपाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति२९

अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वि
तीयप्रयोगस्यैकत्रानुपयोगः ॥ ३० ॥

नदृष्टान्तवचनं परप्रतिपत्तये प्रभवति त-
स्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ३१

नच हेतोरन्यथानुपपत्तिनिर्णीतये यथोक्तत-
र्कप्रमाणादेव तदुपपत्तेः ॥ ३२ ॥

नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन
व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षा-
यामनवस्थितेर्दुर्निवारः समवतारः ॥ ३३ ॥

नाप्यविनाभावस्मृतये प्रतिपन्नप्रतिबन्धस्य-
व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः

अन्तर्व्याप्त्या हेतोःसाध्यप्रत्यायने शक्तावश
क्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥ ३५ ॥

पक्षीकृतएवविषये साधनस्य साध्येन व्याप्ति-

रन्तर्व्याप्तिरन्यत्रतुबहिर्व्याप्तिः यथाऽनैका
न्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः । अग्नि-
मानयं देशो धूमवत्त्वात् य एवं स एवं
यथा पाकस्थानम् ॥ ३६ ॥

नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं-
पक्षेहेतुप्रयोगादेव तस्याः सद्भावात् ॥३७॥

समर्थनमेवपरंपरप्रतिपत्त्यङ्गमास्तां तदन्तरेण
दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥३८॥

मन्दमतींस्तुव्युत्पादयितुं दृष्टान्तोपनयनि-
गमनान्यपि प्रयोज्यानि ॥३९॥

प्रतिबन्धप्रतिपत्तेरास्पदं दृष्टान्तः ॥४०॥

स द्वेधा साधर्म्यतो वैधर्म्यतश्च ॥४१॥

यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता
प्रकाश्यते स साधर्म्यदृष्टान्तः ॥ ४२ ॥

यथा यत्र धूमस्तत्र वह्निर्यथा महानसः॥४३॥

यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते स वैधर्म्यदृष्टान्तः ॥ ४४ ॥

यथाग्न्यभावे नभवत्येवधूमो यथा जलाशये४५

हेतोःसाध्यधर्म्मिण्युपसंहरणमुपनयः ॥४६॥

यथा धूमश्चात्र प्रदेशे ॥४७॥

साध्यधर्मस्य पुनर्निगमनम् ॥४८॥

यथा तस्मादग्निरत्र ॥४९॥

एते पक्षप्रयोगादयः पञ्चाप्यवयवसंज्ञया कीर्त्यन्ते ॥५०॥

उक्तलक्षणो हेतुर्द्विप्रकारःउपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५१॥

उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५२॥

विधिः सदंशः प्रतिषेधोऽसदंशः ॥५३॥

स चतुर्द्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥५४॥

यन्निवृत्तावेव कार्यस्य समुत्पत्तिः सोऽस्य प्रागभावः ॥५५॥

यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥५६॥

यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥५७॥

यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥५८॥

स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः ५९

यथा स्तंभस्वभावात् कुंभस्वभावव्यावृत्तिः ६०

कालत्रयापेक्षिणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभावः ॥६१॥

यथा चेतनाऽचेतनयोः ॥६२॥

उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च ॥ ६३ ॥

तत्राऽविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ६४॥

साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति॥६५॥

तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यञ्च ६६

पूर्वचरोत्तरचरयोर्नस्वभावकार्यकारणभावौ तयोः कालव्यवहितावनुपलम्भात्॥ ६७ ॥

नचातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोःप्रबोधोत्पातौ प्रति कारणत्वं व्यवहि-

तत्त्वेन निर्व्यापारत्वात् ॥६८॥

स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रति ॥ ६९ ॥

नच व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेः ॥ ७० ॥

परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥ ७१ ॥

सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेनतदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः ७२

ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वात् यः प्रयत्नानन्तरीयकः स परिणतिमान् यथा स्तम्भो यो वा न परिणतिमान् स न प्रयत्नान-

न्तरीयको यथा वान्ध्ययः प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येणच ॥ ७३ ॥

अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्य ॥ ७४ ॥

भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्य ॥ ७५ ॥

उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्य ॥ ७६ ॥

उदगुर्मुहूर्त्तात्पूर्वंपूर्वफल्गुन्यउत्तरफल्गुनीनामुद्गमोपलब्धेरित्युत्तरचरस्य ॥ ७७ ॥

अस्तीह सहकारफले रूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्य ॥ ७८ ॥

विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्त-प्रकारा ॥ ७९ ॥

तत्राद्या स्वभावविरुद्धोपलब्धिर्यथा ॥८०॥

नास्त्येव सर्वथैकान्तोनेकान्तस्योपलम्भात् ८१

प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षट् ८२

विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्रसन्देहात् ॥ ८३ ॥

विरुद्धकार्योपलब्धिर्यथा न विद्यते ऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेः ॥ ८४ ॥

विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं वचः समस्तरागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वात् ॥ ८५ ॥

विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्तान्ते पुष्यतारा रोहिण्युद्गमात ॥ ८६ ॥

विरुद्धोत्तरचरोपलब्धिर्यथा नोदगान् मुहूर्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयात् ॥८७॥

विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनात् ॥ ८८ ॥

अनुपलब्धेरपिद्वैरूप्यमविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च ॥ ८९ ॥

तत्राविरुद्धानुपलब्धिःप्रतिषेधावबोधे सप्तप्रकारा ॥ ९० ॥

प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिरिति ॥ ९१ ॥

स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥ ९२ ॥

व्यापकानुपलब्धिर्यथा नास्त्यत्रप्रदेशे प-
नसः पादपानुपलब्धेः ॥ ९३ ॥

कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्ति
कं बीजमङ्कुरानवलोकनात् ॥ ९४ ॥

कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्र-
भृतयोभावास्तत्त्वार्थश्रद्धानाभावात् ॥९५॥

पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्ता-
न्ते स्वातिनक्षत्रं चित्रोदयादर्शनात् ॥९६॥

उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभ-
द्रपदा मुहूर्त्तात्पूर्वमुत्तरभद्रपदोद्गमानवग-
मात् ॥ ९७ ॥

सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञा-
नं सम्यग्दर्शनानुपलब्धेः ॥ ९८ ॥

विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा ९९

विरुद्धकार्यकारणस्वभावव्यापकसहचरा-
नुपलम्भभेदात् ॥ १०० ॥

विरुद्धकार्यानुपलब्धिर्यथाऽत्रशरीरिणि रो-
गातिशयः समस्ति निरोगव्यापारानुपल-
ब्धेः ॥ १०१ ॥

विरुद्धकारणानुपलब्धिर्यथा विद्यते ऽत्र प्रा-
णिनि कष्टमिष्टसंयोगाभावात् ॥१०२॥

विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमने-
कान्तात्मकमेकान्तस्वभावानुपलम्भात्१०३

विरुद्धव्यापकानुपलब्धिर्यथा ऽस्त्यत्र च्छा-
या औष्ण्यानुपलब्धेः ॥ १०४ ॥

विरुद्धसहचरानुपलब्धिर्यथा ऽस्त्यस्य मि-
थ्याज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०५॥

इतिस्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूप-
निर्णयोनामतृतीयः परिच्छेदः ॥ ३ ॥

आप्तवचनादाविर्भूतमर्थसंवेदनमागमः ॥ १ ॥
उपचारादाप्तवचनञ्च ॥ २ ॥
यथा समस्त्यत्र प्रदेशे रत्ननिधानं सन्ति रत्न-
सानुप्रभृतयः ॥ ३ ॥
अभिधेयं वस्तु यथावस्थितं यो जानीते यथा-
ज्ञातञ्चाभिधत्ते स आप्तः ॥ ४ ॥
तस्य हि वचनमविसंवादि भवति ॥ ५ ॥
सच द्वेधा लौकिकोलोकोत्तरश्च ॥ ६ ॥
लौकिको जनकादिर्लोकोत्तरस्तु तीर्थक-
रादिः ॥ ७ ॥

वर्णपदवाक्यात्मकं वचनम् ॥ ८ ॥
अकारादिः पौद्गलिको वर्णः ॥ ९ ॥
वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः
पदं पदानान्तु वाक्यम् ॥ १० ॥

स्वभाविकसामर्थ्यसमयाभ्यामर्थबोधनिब-न्धनं शब्दः ॥ ११॥

अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवत यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनु-सरतः ॥ १२ ॥

सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थम-भिदधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥

एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादवि-रोधेन व्यस्तयोःसमस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितःसप्तधावाक्प्रयो-गः सप्तभङ्गी ॥ १४॥

तद्यथा स्यादस्त्येव सर्वमिति विधिकल्पन-या प्रथमोभङ्गः ॥ १५॥

स्यान्नास्त्येव सर्वमितिनिषेधकल्पनया द्वि-तीयः ॥ १६ ॥

स्यादस्त्येव स्यान्नास्त्येवेति क्रमतोविधिनि
षेधकल्पनया तृतीयः ॥ १७ ॥

स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्प-
नया चतुर्थः ॥ १८ ॥

स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पन-
या युगपद्विधिनिषेधकल्पनया च पञ्चमः १९
स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधक-
ल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः २०

स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवे-
ति क्रमतोविधिनिषेधकल्पनया युगपद्वि-
धिनिषेधकल्पनया च सप्तमइति ॥ २१ ॥

विधिप्रधानएव ध्वनिरिति न साधु ॥ २२ ॥

निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥ २३ ॥

अप्राधान्येनैव ध्वनिस्तमभिधत्तइत्यप्यसारम् २४

कर्हिचित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिप-
न्नस्य तस्याप्राधान्याऽनुपपत्तेः ॥ २५ ॥
निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्याया-
दपास्तम् ॥ २६ ॥
क्रमादुभयप्रधान एवायमित्यपि न साधीयः २७
अस्य विधिनिषेधाऽन्यतरप्रधानत्वानुभव-
स्याप्यबाध्यमानत्वात् ॥ २८ ॥
युगपद्विधिनिषेधात्मनो ऽर्थस्यावाचक ए-
वासौ इतिवचो न चतुरस्रम् ॥ २९ ॥
तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ३०
विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनोयु
गपद्वाचकएव स इत्येकान्तोऽपि न कान्तः ३१
निषेधात्मनः सहद्वयात्मनश्चार्थस्य वाचक-
त्वावाचकत्वाभ्यामपि शब्दस्य प्रतीयमान-
त्वात् ॥ ३२ ॥

निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्म-
नोयुगपदवाचकएवायमित्यप्यवधारणं न
रमणीयम् ॥ ३३ ॥

इतरथापि संवेदनात् ॥ ३४ ॥

क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाच-
कश्चावाचकश्च ध्वनिर्नान्यथा इत्यपि
मिथ्या ॥ ३५ ॥

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ३६

एकत्र वस्तुनि विधीयमाननिषिध्यमानान-
न्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतै-
व सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तू-
न्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ३८

प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्ता-

नामेव संभवात् ॥ ३९ ॥

तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

तस्या ऽपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्याऽपिसप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥४२॥

इयंसप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥

प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनःकालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचःसकलादेशः ४४

तद्विपरीतस्तु विकलादेशः ॥ ४५ ॥

तद्धि भेदमपिप्रमाणमात्मीयप्रतिबन्धकाप-

गमविशेषस्वरूपसामर्थ्यतः प्रतिनियतम-
र्थमवद्योतयति ॥ ४६॥

नतदुत्पत्तितदाकारताभ्यां तयोःपार्थ्यैकये-
न सामस्त्येन च व्यभिचारोपलम्भात्॥४७॥

इति आगमाख्यप्रमाणस्वरूपनिर्ण
योनामचतुर्थः परिच्छेदः ४

तस्य विषयः सामान्यविशेषाद्यनेकान्तात्म-
कं वस्तु ॥ १ ॥

अनुगतविशिष्टाकारप्रतीतिविषयत्वात् प्रा-
चीनोत्तराकारपरित्यागोपादानावस्थान-
स्वरूपपरिणत्यार्थक्रियासामर्थ्यघटनाच्च २

सामान्यं द्विप्रकारं तिर्यक्सामान्यमूर्द्धता-
सामान्यञ्च ॥ ३ ॥

प्रतिव्यक्तितुल्यापरिणतिस्तिर्यक्सामान्यं शबलशाबलेयादिपिण्डेषु गोत्वं यथा॥४॥

पूर्वापरपरिणामसाधारणंद्रव्यमूर्द्धतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवत् ॥५॥

विशेषोपि द्विरूपो गुणः पर्यायश्च ॥ ६ ॥

गुणः सहभावीधर्मो यथात्मनि विज्ञानव्यक्तिशक्त्यादिः ॥ ७ ॥

पर्यायस्तूक्रमभावी यथातत्रैवसुखदुःखादिः८

इतिविषयस्वरूपनिर्णयोनामपञ्चमः परिच्छेदः ।

यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥ १ ॥

तद्विविधमानन्तर्येण पारम्पर्येण च ॥ २ ॥

तत्राऽऽनन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलम् ॥ ३ ॥

पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥ ४ ॥

शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥ ५ ॥

तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः ॥ ६ ॥

उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन हेतोर्व्यभिचारइति न विभावनीयम् ॥ ७ ॥

तस्यैकप्रमातृतादात्म्येन प्रमाणादभेदव्यवस्थितेः ॥ ८ ॥

प्रमाणतया परिणतस्यैवात्मनः फलतया परिणतिप्रतीतेः ॥ ९ ॥

यः प्रमिमीते स एवोपादत्ते परित्यजत्युपेक्ष-

ते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवात् ॥ १० ॥

इतरथा स्वपरयोः प्रमाणफलव्यवस्थाविप्लवः प्रसज्येत ॥ ११ ॥

अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्तइति नाशङ्कनीयम् ॥ १२ ॥

कथञ्चित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानात् १३

साध्यसाधनभावेन प्रमाणफलयोः प्रतीयमानत्वात् ॥ १४ ॥

प्रमाणं हि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वात् ॥ १५ ॥

स्वपरव्यवसितिक्रियारूपाऽज्ञाननिवृत्त्याख्यं फलं तु साध्यं प्रमाणनिष्पाद्यत्वात् ॥ १६ ॥

प्रमातुरपि स्वपरव्यवसितिक्रियायाः कथ-
ञ्चिद्भेदः ॥ १७॥

कर्तृक्रिययोःसाध्यसाधकभावेनोपलम्भात् ॥
कर्त्ता हि साधकः स्वतन्त्रत्वात् क्रियातु सा-
ध्या कर्तृनिर्वर्त्यत्वात् ॥१९॥

न च क्रियाक्रियावतः सकाशादभिन्नैव
भिन्नैव वा प्रतिनियतक्रियाक्रियावद्भावभङ्ग-
प्रसङ्गात् ॥ २० ॥

संवृत्या प्रमाणफलव्यवहार इत्यप्रामाणिक-
प्रलापः परमार्थतः स्वाभिमतसिद्धिविरो-
धात् ॥ २१ ॥

ततः पारमार्थिक एव प्रमाणफलव्यवहारः
सकलपुरुषार्थसिद्धिहेतुः स्वीकर्त्तव्यः।२२।
प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीतं तदा-

भासम् ॥ २३ ॥

अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपाः प्रमाणस्य स्वरूपाभासाः ॥ २४ ॥

यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसंशयानध्यवसायाः । तेभ्यः स्वपरव्यवसायस्यानुपपत्तेः ॥ २६ ॥

सांव्यवहारिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २७ ॥

यथाऽम्बुधरेषु गन्धर्वनगरज्ञानं दुःखे सुखज्ञानञ्च ॥ २८ ॥

पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासम् ॥ २९ ॥

यथा शिवाख्यस्य राजर्षेरसंख्यातद्वीपसमु-

द्रेषु सप्तद्वीपसमुद्रज्ञानम् ॥ ३० ॥

अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभा-
सम् ॥ ३१ ॥

अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथा

तुल्ये पदार्थे स एवायमित्येकस्मिंश्च तेन
तुल्य इत्यादिज्ञानं प्रत्यभिज्ञाभासम् ॥ ३३ ॥

यमलकजातवत् ॥ ३४ ॥

असत्यामपि व्याप्तौ तदवभासस्तर्काभासः ३५

सश्यामो मैत्रतनयत्वात् इत्यत्र यावान् मैत्र-
तनयः सश्यामः इति यथा ॥ ३६ ॥

पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासम-
वसेयम् ॥ ३७ ॥

तत्र प्रतीतानिराकृतानभीप्सितसाध्यधर्म-
विशेषणास्त्रयः पक्षाभासाः ॥ ३८ ॥

प्रतीतसाध्यधर्म्मविशेषणो यथार्हतान् प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्तिजीव इत्यादि ॥३९॥

निराकृतसाध्यधर्मविशेषणः प्रत्याक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य निराकरणादनेकप्रकारः ॥ ४० ॥

प्रत्यक्षनिराकृतसाध्यधर्म्मविशेषणो यथा नास्तिभूतविलक्षणआत्मा ॥ ४१ ॥

अनुमाननिराकृतसाध्यधर्मविशेषणो यथा नास्ति सर्वज्ञो वीतरगो वा ॥४२॥

आगमनिराकृतसाध्यधर्मविशेषणो यथा जैनै रजनिभोजनं भजनीयम् ॥४३॥

लोकनिराकृतसाध्यधर्म्मविशेषणो यथा नापारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥४४॥

स्ववचननिराकृतसाध्यधर्म्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदकं प्रमाणम् ॥४५॥

अनभीप्सितसाध्यधर्म्मविशेषणो यथा स्याद्वादिनः शाश्वतिकएव कलशादिरशाश्वतिक एवेति वदतः ॥४६॥

असिद्धविरुद्धानैकान्तिकास्त्रयोहेत्वाभासाः ॥ ४७ ॥

यस्यान्यथानुपपत्तिः प्रमाणेन न प्रतीयतेसोऽसिद्धः ॥४८॥

सद्विविध उभयासिद्धोऽन्यतरासिद्धश्च ४९

उभयासिद्धो यथा परिणामीशब्दश्चाक्षुषत्वात् ॥५०॥

अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ५१।

साध्यविपर्ययेणैव यस्यान्यथानुपपत्तिरध्यव-सीयते स विरुद्धः ॥५२॥

यथा नित्यएव पुरुषोऽनित्यएव वा प्रत्यभिज्ञानादिमत्वात् ॥५३॥

यस्यान्यथानुपपत्तिः सन्दिह्यते सोऽनैका-न्तिकः ॥ ५४ ॥

सद्वेधा निर्णीतविपक्षवृत्तिकः सन्दिग्ध-विपक्षवृत्तिकश्च ॥ ५५ ॥

निर्णीतविपक्षवृत्तिको यथा नित्यः शब्दः प्रमेयत्वात् ॥५६॥

सन्दिग्धविपक्षवृत्तिको यथा विवादापन्नः पुरुषः सर्वज्ञो न भवति वक्तृत्वात् ॥५७॥

साधर्म्येण दृष्टान्ताभासोनवप्रकारः ॥५८॥

साध्यधर्मविकलः साधनधर्मविकलः उभ-

यधर्मविकलः सन्दिग्धसाध्यधर्म्मा सन्दिग्धसाधनधर्म्मा सन्दिग्धोभयधर्म्मानन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ५९।

तत्रापौरुषेयः शब्दोऽमूर्त्तत्वाद्दुःखवदिति साध्यधर्मविकलः ॥ १ ॥ ६० ॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमाणुवदिति साधनधर्मविकलः ॥ २॥६१॥

कलशवदित्युभयधर्म्मविकलः ॥ ३ ॥ ६२॥

रागादिमानयं वक्तृत्वाद्देवदत्तवदिति सन्दिग्धसाध्यधर्मा ॥ ४ ॥ ६३ ॥

मरणधर्मायं रागादिमत्वात् मैत्रवदिति संदिग्धसाधनधर्मा ॥ ५ ॥६४॥

नायं सर्वदर्शी रागादिमत्त्वान्मुनिविशेषवदिति सन्दिग्धोभयधर्मा । ६ । ६५ ॥

रागादिमान् विवक्षितः पुरुषोवक्तृत्वादिष्ट-
पुरुषवदित्यनन्वयः । ७ । ६६ ॥

अनित्यः शब्दः कृतकत्वात् घटवदित्य-
प्रदर्शितान्वयः । ८ । ६७ ॥

अनित्यः शब्दः कृतकत्वात् यदनित्यं
तत् कृतकं घटवदिति विपरीतान्वयः ।९।६८॥
वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥६९॥
असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यति-
रेकोऽसिद्धोभयव्यतिरेकः सन्दिग्धसाध्य-
व्यतिरेकः सन्दिग्धसाधनव्यतिरेकः सन्दि-
ग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्य-
तिरेको विपरीतव्यतिरेकश्च ॥ ७० ॥

तेषु भ्रान्तमनुमानं प्रमाणत्वात्यत्पुनर्भ्रान्तं
न भवति न तत् प्रमाणं यथा स्वप्नज्ञानमिति

असिद्धसाध्यव्यतिरेकः स्वप्न ज्ञानात् भ्रान्त त्वस्यानिवृत्तेः । १ । ७१ ॥

निर्विकल्पकं प्रत्यक्षं प्रमाणत्वाद्यत्तु सविकल्पकं न तत्प्रमाणं यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः । २ । ७२ ॥

नित्यानित्यःशब्दः सत्वात् यस्तु न नित्यानित्यः सनसंस्तद्यथा स्तम्भ इत्यसिद्धोभयव्यतिरेकः स्तम्भान्नित्यान्नित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः । ३ । ७३ ॥

असर्वज्ञोऽनाप्तो वा कपिलोऽक्षीणकैकान्तवादित्वाद्यः सर्वज्ञ आप्तो वा सक्षणिकैकान्तवादी यथासुगत इति सान्दिग्धसाध्यव्यतिरेकः सुगतेऽसर्वज्ञतानाप्तत्वयोः साध्य-

धर्म्मयोर्व्यावृत्तेः सन्देहात् । ४ । ७४ ॥

अनादेयवचनः कश्चिद्विवक्षितः पुरुषो रागादिमत्त्वाद्यः पुनरादेयवचनः स वीतरागस्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधनव्यतिरेकः शौद्धोदनौ रागादिमत्त्वस्य निवृत्तेः संशयात् । ७५ ॥५॥

नवीतरागः कपिलः करुणास्पदेष्वपि परमकृपयाऽनर्प्पितनिजपिशितशकलत्वात् यस्तुवीतरागः सकरुणास्पदेषुपरमकृपया समर्प्पितनिजपिशितशकलस्तद्यथातपनबन्धुरितिसन्दिग्धोभयव्यतिरेकः तपनबन्धौवीतरागत्वाभावस्य करुणास्पदेष्वपि परमकृपयानर्प्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् । ६ ॥ ७६ ॥

न वीतरागः कश्चिद्विवक्षितः पुरुषोवक्तृत्वात् यः पुनर्वीतरागो न स वक्ता यथोपलखण्डइत्यव्यतिरेकः। ७७ ॥ ७ ॥

अनित्यः शब्दः कृतकत्वादाकाशवदित्यप्रदर्शितव्यतिरेकः। ७८ ॥ ७॥

अनित्यः शब्दः कृतकत्वाद्यदकृतकं तन्नित्यं यथाकाशमिति विपरीतव्यतिरेकः।७९॥३॥

उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने तदाभासौ ॥ ८० ॥

यथापरिणामीशब्दः कृतकत्वाद्यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति च ८१।

तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्दइति तस्मात्परिणामी कुम्भ इति वा॥८२॥

अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ।८३।

यथा मेकलकन्यकायाः कूले तालहिंतालयोर्मूलेसुलभाः पिण्डखर्जूराः सन्तित्वरितं गच्छत २ शावकाः ॥ ८४ ॥

प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्यानं तस्य संख्याभासम् ॥ ८५ ॥

सामान्यमेव विशेषएव तद्द्वयं वा स्वतन्त्रमित्यादिस्तस्य विषयाभासः ॥ ८६ ॥

अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासम् ॥ ८७ ॥

इति फलप्रमाणस्वरूपाद्याभासनिर्णयोनाम षष्ठः परिच्छेदः ॥ ६ ॥

नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः सप्रतिपत्तुरभिप्रायविशेषो नयः ॥ १ ॥

स्वाभिप्रेतादंशादितरांशापलापी पुनर्नयाभासः ॥ २ ॥

स व्याससमासाभ्यां द्विप्रकारः ॥ ३ ॥

व्यासतोऽनेकविकल्पः ॥ ४ ॥

समासतस्तु द्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च ॥ ५ ॥

आद्यो नैगमसंग्रहव्यवहारभेदात्त्रेधा ॥ ६ ॥

धर्म्मयोर्धर्म्मिणोर्धर्म्मधर्म्मिणोश्च प्रधानोपसर्जनभावेन यद्विवक्षणं स नैकगमो नैगमः ॥ ७ ॥

सच्चैतन्यमात्मनीति धर्म्मयोः ॥ ८ ॥

वस्तुपर्यायवद्द्रव्यं इति धर्म्मिणोः ॥ ९ ॥
क्षणमेकं सुखीविषयासक्तजीवइति धर्म-धर्म्मिणोः ॥ १० ॥

धर्म्मद्वयादीनामैकान्तिकपार्थक्याभिसन्धि-र्नैगमाभासः ॥ ११ ॥
यथात्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग्भूते इत्यादि ॥ १२ ॥

सामान्यमात्रग्राही परामर्शः संग्रहः ॥१३॥
अयमुभयविकल्पः परोऽपरश्च ॥ १४ ॥
अशेषविशेषेष्वौदासीन्यम्भजमानः शुद्धद्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः १५
विश्वमेकं सदाविशेषादिति यथा ॥ १६ ॥
सत्ताद्वैतं स्वीकुर्वाणः सकलविशेषान्निराचक्षाणस्तदाभासः ॥ १७ ॥

यथासत्तैव तत्त्वन्ततः पृथग्भूतानां विशेषणामदर्शनात् ॥ १८ ॥

द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वानस्तद्भेदेषु गजनिमीलिकामवलम्बमानः पुनरपरसंग्रहः ॥ १९ ॥

धर्माधर्माकाशकालपुद्गलजीवद्रव्याणामैक्यं द्रव्यत्वाभेदादित्यादिर्यथा ॥ २० ॥

द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नुवानस्तदाभासः ॥ २१ ॥

यथा द्रव्यत्वमेव तत्त्वं ततोऽर्थान्तरभूतानां द्रव्याणामनुपलब्धेः ॥ २२ ॥

संग्रहेण गोचरीकृतानामर्थानां विधिपूर्वकमवहरणं येनाभिसन्धिना क्रियते स व्यवहारः ॥ २३ ॥

यथा यत्सत्तद्द्रव्यं पर्यायोवेत्यादि ॥२४॥

यः पुनरपारमार्थिकद्रव्यपर्यायविभागम-भिप्रैति स व्यवहाराभासः ॥ २५ ॥

यथा चार्वाकदर्शनम् ॥ २६ ॥

पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः सम-भिरूढ एवंभूतश्च ॥ २७ ॥

ऋजुवर्त्तमानक्षणस्थायिपर्यायमात्रंप्राधान्यतः सूत्रयन्नभिप्राय विशेष ऋजुसूत्रः ॥ २८ ॥

यथासुखविवर्त्तः सम्प्रत्यस्तीत्यादि ॥२९॥

सर्वथाद्रव्यापलापीतदाभासः ॥ ३० ॥

यथा तथागतमतम् ॥ ३१ ॥

कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः ॥ ३२ ॥

यथा बभूव भवति भविष्यति सुमेरुरित्यादिः।

तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः३४

यथा बभूव भवति भविष्यति सुमेरुरित्याद-
योभिन्नकालः शब्दाभिन्नमेवार्थमभिदध-
ति भिन्नकालशब्दत्वात्ताहक्सिद्धान्यश-
ब्दवदित्यादिः ॥ ३५ ॥

पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं सम-
भिरोहन्समभिरूढः ॥ ३६ ॥

इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात्
पुरन्दर इत्यादिषु यथा ॥ ३६ ॥

पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकु-
र्वाणस्तदाभासः ॥ ३७ ॥

यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दाभि-
न्नाभिधेयाएव भिन्नशब्दत्वात् करिकुरङ्ग-
तुरङ्गशब्दवदित्यादिः ॥ ३८ ॥

शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियाविष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ।३९।

यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ।४०।

क्रियानाविष्टं वस्तुशब्दवाच्यतया प्रतिक्षिपंस्तुतदाभासः ॥ ४२ ॥

यथाविशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घटशब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥

एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थनयाः शेषास्तुत्रयः शब्दवाच्यार्थगोचरतया शब्दनयाः ॥ ४४ ॥

पूर्वः पूर्वोनयः प्रचुरगोचरः परः परस्तु परिमितविषयः ॥ ४५ ॥

सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभू-
मिकत्वात् भूमविषयः ॥ ४६ ॥

सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्त-
सत्समूहोपदर्शकत्वात्बहुविषयः ॥ ४७ ॥

वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकाल-
विषयावलम्बित्वादनल्पार्थः ॥ ४८ ॥

कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृ-
जुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥ ४९ ॥

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभि-
रूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूत-
विषयः ॥ ५० ॥

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभू-
तात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महा-
गोचरः ॥ ५१ ॥

नयवाक्यमपिस्वविषये प्रवर्त्तमानं विधि-
प्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५२ ॥

प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥५३॥

प्रमाताप्रत्यक्षादिप्रसिद्धआत्मा ॥ ५४ ॥

चैतन्यस्वरूपः परिणामीकर्त्ता साक्षाद्भोक्ता-
स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलि-
कादृष्टवांश्चायम् ॥ ५५ ॥

तस्योपात्तपुंस्त्रीशरीरस्य सम्यग्ज्ञानक्रियाभ्यां
कृत्स्नकर्मक्षयस्वरूपासिद्धिः ॥ ५६ ॥

इति श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वा-
लोकालङ्कारेनयात्मस्वरूपनिर्णयो नाम
सप्तमः परिच्छेदः ॥ ७ ॥

अष्टमः परिच्छेदः ।

विरुद्धयोर्धर्म्मयोरेकधर्म्मव्यवच्छेदेनस्वीकृ-
ततदन्यधर्म्मव्यवस्थापनार्थं साधनदूषण-
वचनं वादः ॥ १ ॥

प्रारम्भकश्चात्र विजिगीषुस्तत्त्वनिर्णिनीषुश्च

स्वीकृतधर्मव्यवस्थापनार्थं साधनदूषणाभ्यां
परं पराजेतुमिच्छुर्जिगीषुः॥ ३ ॥

तथैव तत्त्वंप्रतितिष्ठापयिषुस्तत्त्वनिर्णिनीषुः ४

अयं च द्वेधा स्वात्मनि परत्र च ॥५ ॥

आद्यः शिष्यादिः ॥ ६ ॥

द्वितीयोगुर्वादिः ॥ ७ ॥

अयं द्विविधः क्षायोपशमिकज्ञानशाली
केवली च ॥ ८ ॥

एतेन प्रत्यारम्भकोपि व्याख्यातः ॥ ९ ॥

तत्र प्रथमे प्रथमतृतीयतुरीयाणां चतुरङ्गए-

वान्यतमस्याप्यङ्गस्यापाये जयपराजयव्यव-
स्थादिदौस्थ्यापत्तेः ॥१०॥

द्वितीये तृतीयस्य कदाचिद्व्यङ्गः कदाचित्त्र्यङ्गः
तत्रैव द्व्यङ्गस्तुरीयस्य ॥१२॥

तृतीये प्रथमादीनां यथायोगं पूर्व्ववत् ॥१३॥

तुरीये प्रथमादीनामेवम् ॥१४॥

वादिप्रतिवादिसभ्यसभापतयश्चत्वार्य्यङ्गानि
प्रारम्भकप्रत्यारम्भकावेव मल्लप्रतिमल्ल-
न्यायेन वादिप्रतिवादिनौ ॥ १६ ॥

प्रमाणतः स्वपक्षस्थापनप्रतिपक्षप्रतिक्षेपाव-
नयोः कर्म्म ॥१७॥

वादिप्रतिवादिसिद्धान्ततत्त्वनदीष्णत्वधार-
णाबाहुश्रुत्यप्रतिभाक्षान्तिमाध्यस्थ्यैरुभयाभि-
मताःसभ्याः॥ १८ ॥

वादिप्रतिवादिनोर्यथायोगं वादस्थानक-
कथाविशेषाङ्गीकारेणाग्रवादोत्तरवादनिर्देशः
साधकबाधकोक्तिगुणदोषावधारणं यथा-
वसरन्तत्त्वप्रकाशनेन कथाविरमणं यथासंभ-
वं सभायांकथाफलकथनं चैषांकर्माणि ॥१९॥

प्रज्ञाज्ञैश्वर्यक्षमामाध्यस्थ्यसंपन्नः सभापतिः॥
वादिसभ्याभिहितावधारणकलहव्यपोहादिकं
चास्य कर्म्म ॥२१॥

सजिगीषुकेऽस्मिन्यावत्सभ्यापेक्षं स्फूर्तौवक्त-
व्यम् ॥ २२ ॥

उभयोस्तत्त्वनिर्णिनीषुत्वेयावत्तत्त्वनिर्णयं
यावत्स्फूर्त्तिं च वाच्यम् ॥ २३ ॥

इतिश्रीदेवाचार्यनिर्मितेप्रमाणनयतत्त्वालोका-
लङ्कारेवादिप्रतिवादिन्यायनिर्णयोनामाष्टमः
परिच्छेदः ॥ ८ ॥

वि. ११४५ जन्म

श्रीजैनयशोविजयग्रन्थमाला [६]




कलिकालसर्वज्ञश्रीहेमचन्द्राचार्य-
विरचितः।

# श्रीसिद्धहेमसूत्रपाठः।

किं स्तुमः शब्दपाथोधेर्हेमचन्द्रयतेर्मतिम्।
एकेनापि हि येनेदृक् कृतं शब्दानुशासनम्॥

काशीस्थश्रीयशोविजयजैनपाठशालातः
प्रकाशितः।

काश्यां
चन्द्रप्रभा मुद्रणालये मुद्रापितः।
वीर संवत् २४३२।

* ११५० दीक्षा *

११६६ आचार्य



श्रीहेमचन्द्राचार्यविरचितः

# श्रीसिद्धहेमशब्दानुशासनसूत्रपाठः ।



## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

१ अर्हँ ।

२ सिद्धिः स्याद्वादात् ।

३ लोकात् ।

४ औदन्ताः स्वराः ।

५ एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ।

६ अनवर्णा नामी ।

७ लृदन्ताः समानाः ।

८ एऐओऔ सन्ध्यक्षरम् ।

९ अंअः अनुस्वारविसर्गौ ।

१० कादिर्व्यञ्जनम् ।

११ अपञ्चमान्तस्थो धुट् ।

१२ पञ्चको वर्गः ।

१३ आद्यद्वितीयशषसा अघोषाः ।

१४ अन्यो घोषवान् ।

१५ यरलवा अन्तस्थाः ।

१६ अंअः ᳲकᳲपशषसाः शिट् ।
१७ तुल्यस्थानास्यप्रयत्नः स्वः
१८ स्यौजसमौशस्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुपां त्रयी त्रयी प्रथमादिः ।
१९ स्त्यादिर्विभक्तिः ।
२० तदन्तं पदम् ।
२१ नाम सिदय्व्यञ्जने ।
२२ नं क्ये ।
२३ न स्तं मत्वर्थे ।
२४ मनुर्नभोऽङ्गिरो वति ।
२५ वृत्त्यन्तोऽसषे ।
२६ सविशेषणमाख्यातं वाक्यम् ।
२७ अधातुविभक्तिवाक्यमर्थवन्नाम ।
२८ शिर्घुट् ।
२९ पुंस्त्रियोः स्यमौजस् ।
३० स्वरादयोऽव्ययम् ।
३१ चादयोऽसत्त्वे ।
३२ अधण्तस्वाद्याशसः ।
३३ विभक्तिथमन्ततसाद्याभाः ।
३४ वत्तस्याम् ।
३५ क्त्वातुमम् ।
३६ गतिः ।
३७ अप्रयोगीत् ।
३८ अनन्तः पञ्चम्याः प्रत्ययः
३९ डत्यतु संख्यावत् ।
४० बहुगणं भेदे ।
४१ कसमासेऽध्यर्द्धः ।

४२ अर्द्धपूर्वपदः पूरणः ।

द्वितीयः पादः ।

१ समानानां तेन दीर्घः ।
२ ऋऌति ह्रस्वो वा ।
३ ऌत ऌॄ ऋऌभ्यां वा ।
४ ऋतो वा तौ च
५ ऋस्तयोः ।
६ अवर्णस्येवर्णादिनैदोदरल्
७ ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् ।
८ ऋते तृतीयासमासे ।
९ ऋत्यारुपसर्गस्य ।
१० नाम्नि वा ।
११ ऌत्याल्वा ।
१२ ऐदौत्सन्ध्यक्षरैः ।
१३ ऊटा ।
१४ प्रस्यैषैष्योढोढ्यूहे स्वरेण
१५ स्वैरस्वैर्यक्षौहिण्याम् ।
१६ अनियोगे लुगेवे ।
१७ वौष्ठौतौ समासे ।
१८ ओमाङि ।
१९ उपसर्गस्यानिणेधेदोति।
२० वा नाम्नि ।
२१ इवर्णादेरस्वे स्वरे यवरलम् ।
२२ ह्रस्वोऽपदे वा
२३ एदैतोऽयाय् ।
२४ ओदौतोऽवाव् ।
२५ य्यक्ये ।
२६ ऋतो रस्तद्धिते
२७ एदोतः पदान्तेऽस्य लुक्।
२८ गोर्नाम्न्यवोऽक्षे ।
२९ स्वरे वाऽनक्षे ।

३० इन्द्रे ।
३१ वात्यऽसन्धिः ।
३२ प्लुतोऽनितौ ।
३३ इ ३ वा ।
३४ ईदूदेद्द्विवचनम् ।
३५ अदो मुमी ।
३६ चादिः स्वरो ऽनाङ् ।
३७ ओदन्तः ।
३८ सौ नवेतौ
३९ ऊँ चोञ् ।
४० अञ्वर्गात् स्वरे वो ऽसन् ।
४१ अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः ।

---

तृतीयः पादः ।

१ तृतीयस्य पञ्चमे ।
२ प्रत्यये च ।
३ ततो हश्चतुर्थः ।
४ प्रथमादधुटि शश्छः ।
५ रः कखपफयोः ᳲकᳲपौ
६ शषसे शषसं वा ।
७ चटते सद्वितीये ।
८ नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे ।
९ पुमो ऽशिट्यघोषेऽख्यागि रः ।
१० नॄनः पेषु वा ।
११ द्विः कानः कानि सः ।
१२ स्सटि समः ।
१३ लुक् ।
१४ तौ मुमो व्यञ्जने स्वौ ।
१५ मनयवलपरे हे ।
१६ सम्राट् ।
१७ ङ्णोः कटावन्तौ शिटि

नवा ।
१८ ङ्नः सः त्सोऽश्वः ।
१९ नः शि ञ्च् ।
२० अतोऽति रोरुः ।
२१ घोषवति ।
२२ अवर्णभोभगोऽघोर्लुग-
सन्धिः ।
२३ व्योः ।
२४ स्वरे वा ।
२५ अस्पष्टाववर्णात्त्वनुञि
वा ।
२६ रोर्यः ।
२७ ह्रस्वान्ङणनो द्वे ।
२८ अनाङ्माङो दीर्घाद्वा छः
२९ प्लुताद्वा ।
३० स्वरेभ्यः ।
३१ हादर्हस्वरस्यानु नवा ।
३२ अदीर्घाद्विरामैकव्यञ्जने ।
३३ अञ्वर्गस्यान्तस्थातः ।
३४ ततोऽस्याः ।
३५ शिटः प्रथमद्वितीयस्य ।
३६ ततः शिटः ।
३७ न रात्स्वरे ।
३८ पुत्रस्यादिन्पुत्रादिन्या-
क्रोशे ।
३९ म्नां धुड्वर्गेऽन्त्यो-
ऽपदान्ते ।
४० शिड्हेऽनुस्वारः
४१ रो रे लुग्दीर्घश्चादिदुतः
४२ ढस्तड्ढे ।
४३ सहिवहेरोच्चाऽवर्णस्य ।
४४ उदः स्थास्तम्भः सः ।
४५ तदः सेः स्वरे पादार्था ।

४६ एतदश्च व्यञ्जने ऽनम्नञ्समासे ।

४७ व्यञ्जनात्पञ्चमान्तस्थायाः सरूपे वा ।

४८ धुटो धुटि स्वे वा ।

४९ तृतीयस्तृतीयचतुर्थे ।

५० अघोषे प्रथमोऽशिटः ।

५१ विरामे वा ।

५२ न सन्धिः ।

५३ रः पदान्ते विसर्गस्तयोः ।

५४ ख्यागि ।

५५ शिट्यघोषात् ।

५६ व्यत्यये लुग्वा ।

५७ अरोः सुपि रः ।

५८ वाहर्पत्यादयः ।

५९ शिट्याद्यस्य द्वितीयो वा ।

६० तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ ।

६१ सस्य शषौ ।

६२ न शात् ।

६३ पदान्ताट्टवर्गादनाम्नगरीनवतेः ।

६४ षि तवर्गस्य ।

६५ लि लौ ।



चतुर्थः पादः ।

१ अत आः स्यादौ जस्भ्याम्ये ।

२ भिस ऐस् ।

३ इदमदसोऽक्येव

४ एद्बहुस्भोसि ।

५ टाङसोरिनस्यौ ।

६ ङेङस्योर्यातौ ।

७ सर्वादेः स्मैस्मातौ ।

८ ङेः स्मिन् ।

९ जस इः ।

१० नेमार्द्धप्रथमचरमतयायाल्पकतिपयस्य वा ।

११ द्वन्द्वे वा ।

१२ न सर्वादिः ।

१३ तृतीयान्तात्पूर्वावरं योगे ।

१४ तीयं ङित्कार्ये वा ।

१५ अवर्णस्यामः साम् ।

१६ नवभ्यः पूर्वेभ्य इस्मात्स्मिन्वा ।

१७ आपो ङितां यैयास्यास्याम् ।

१८ सर्वादेर्डस्पूर्व्वाः ।

१९ टौस्येत् ।

२० औता ।

२१ इदुतोऽस्त्रेरीदूत् ।

२२ जस्येदोत् ।

२३ ङित्यदिति ।

२४ टः पुंसि ना ।

२५ ङिडौं ।

२६ केवलसखिपतेरौ ।

२७ न ना ङिदेत् ।

२८ स्त्रियां ङितां वा दैदास्दास्दाम् ।

२९ स्त्रीदूतः ।

३० वेयुवोऽस्त्रियाः ।

३१ आमो नाम् वा ।

३२ ह्रस्वापश्च ।

३३ संख्यानां र्ष्णाम् ।

३४ त्रेस्त्रयः ।

३५ एदोद्भ्यां ङसिङसो रः ।

३६ खितिखीतीय उर् ।

३७ ऋतो डुर् ।

३८ तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृ-होतृपोतृप्रशास्त्रो घुट्यार् ।

३९ अर्डौ च ।

४० मातुर्मातः पुत्रेऽर्हे सिना-ऽऽमन्त्र्ये ।

४१ ह्रस्वस्य गुणः ।

४२ एदापः ।

४३ नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः ।

४४ अदेतः स्यमोर्लुक् ।

४५ दीर्घङ्याब्व्यञ्जनात्सेः ।

४६ समानादमोऽतः ।

४७ दीर्घो नाम्यतिसृचतसृषः ।

४८ नुर्वा ।

४९ शसोऽता सश्च नः पुंसि ।

५० संख्यासायवेरह्नस्याहन् ङौ वा ।

५१ निय आम् ।

५२ वाष्टन आः स्यादौ ।

५३ अष्टऔर्जस्शसोः ।

५४ डतिष्णः संख्याया लुप् ।

५५ नपुंसकस्य शिः ।

५६ औरीः ।

५७ अतः स्यमोऽम् ।

५८ पञ्चतोऽन्यादेरनेकतरस्य

दः ।

५९ अनतो लुप् ।

६० जरसो वा ।

६१ नामिनो लुग्वा ।

६२ वान्यतः पुमांष्टादौ स्वरे ।

६३ दध्यस्थिसक्थ्यक्ष्णो-ऽन्तस्यान् ।

६४ अनाम्स्वरे नोऽन्तः ।

६५ स्वराच्छौ ।

६६ धुटां प्राक् ।

६७ र्लो वा ।

६८ घुटि ।

६९ अचः ।

७० ऋदुदितः ।

७१ युञ्जोऽसमासे ।

७२ अनडुहः सौ ।

७३ पुंसोः पुमन्स् ।

७४ ओत औः ।

७५ आ अम्शसोऽता ।

७६ पथिन्मथिन्ऋभुक्षः सौ ।

७७ एः

७८ थो न्थ् ।

७९ इन् ङीस्वरे लुक् ।

८० वोशनसो नश्चामन्त्र्ये सौ ।

८१ उतोऽनडुच्चतुरो वः ।

८२ वाः शेषे ।

८३ सख्युरितोऽशावैत् ।

८४ ऋदुशनस्पुरुदंशोऽने-हसश्च सेर्डाः ।

८५ नि दीर्घः ।

८६ न्स्महतोः ।

८७ इन्हन्पूषार्यम्णः शिस्योः ।

८८ अपः ।

८९ नि वा ।

९० अभ्वादेरत्वसः सौ ।

९१ क्रुशस्तुनस्तृच् पुंसि ।

९२ टादौ स्वरे वा ।

९३ स्त्रियाम् ।

## द्वितीयोऽध्यायः ।

### प्रथमः पादः ।

१ त्रिचतुरास्तिसृचतसृ स्यादौ ।

२ ऋतो रः स्वरेऽनि ।

३ जराया जरस्वा ।

४ अपोद्भे ।

५ आ रायो व्यञ्जने ।

६ युष्मदस्मदोः ।

७ टाङ्योसि यः ।

८ शेषे लुक् ।

९ मोर्वा ।

१० मन्तस्य युवावौ द्वयोः ।

११ त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ।

१२ त्वमहं सिना प्राक्चाकः ।

१३ यूयंवयं जसा ।

१४ तुभ्यंमह्यं ङया ।

१५ तवमम ङसा ।

१६ अमौ मः ।

१७ शसो नः ।

१८ अभ्यम् भ्यसः ।

१९ ङसेरश्चाद् ।

२० आम आकम्।

२१ पदाद्युग्विभक्त्यैकवा-
क्ये वस्नसौ बहुत्वे।

२२ द्वित्वे वाम्नौ।

२३ ङेङसा तेमे।

२४ अमा त्वामा।

२५ असदिवामन्त्र्यं पूर्वम्।

२६ जस्विशेष्यं वामन्त्र्ये।

२७ नाऽन्यत्।

२८ पादाद्योः।

२९ चाहहवैवयोगे।

३० दृश्यर्थैश्चिन्तायाम्।

३१ नित्यमन्वादेशे।

३२ सपूर्वात् प्रथमान्ताद्वा।

३३ त्यदामेनदेतदो द्विती-
याटौस्यवृत्त्यन्ते।

३४ इदमः।

३५ अद्व्यञ्जने।

३६ अनक्।

३७ टौस्यनः।

३८ अयमियम् पुंस्त्रियोः सौ।

३९ दोमः स्यादौ।

४० किमः कस्तसादौ च।

४१ आ द्वेरः।

४२ तः सौ सः।

४३ अदसो दः सेस्तु डौ।

४४ असुको वाऽकि।

४५ मोऽवर्णस्य।

४६ वाद्रौ।

४७ मादुवर्णोऽनु।

४८ प्रागिनात्।

४९ बहुष्वेरीः।

५० धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ।
५१ इणः ।
५२ संयोगात् ।
५३ भ्रूश्नोः ।
५४ स्त्रियाः ।
५५ वाम्शसि ।
५६ योऽनेकस्वरस्य ।
५७ स्यादौ वः ।
५८ क्विब्वृत्तेरसुधियस्तौ ।
५९ दृन्पुनर्वर्षाकारैर्भुवः ।
६० णषमसत्परे स्यादिविधौ च ।
६१ क्तादेशोऽषि ।
६२ षढोः कस्सि ।
६३ भ्वादेर्नामिनो दीर्घोर्वो-र्व्यञ्जने ।
६४ पदान्ते ।
६५ न यि तद्धित ।
६६ कुरुच्छुरः ।
६७ मो नो म्वोश्च ।
६८ स्रंस्ध्वंस्क्वस्सनडुहो दः
६९ ऋत्विज्दिश्दृश्स्पृश्-स्रज्दधृषुष्णिहो गः ।
७० नशो वा ।
७१ युजञ्चक्रुञ्चो नो ङः ।
७२ सो रुः ।
७३ सजुषः ।
७४ अह्नः ।
७५ रो लुप्यरि ।
७६ धुटस्तृतीयः ।
७७ गडदबादेश्चतुर्थान्तस्यै-कस्वरस्यादेश्चतुर्थः

स्ध्वोश्च प्रत्यये ।

७८ धागस्तथोश्च ।

७९ अधश्चतुर्थात्तथोर्धः ।

८० र्नाम्यन्तात्परोक्षाद्यतन्याशिषो धो ढः ।

८१ हान्तस्थाञ्जीड्भ्यां वा ।

८२ हो धुट्पदान्ते ।

८३ भ्वादेर्दादेर्घः ।

८४ मुहद्रुहष्णुहष्णिहो वा ।

८५ नहाहोर्द्धतौ ।

८६ चजः कगम् ।

८७ यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः

८८ संयोगस्यादौ स्कोर्लुक् ।

८९ पदस्य ।

९० रात्सः ।

९१ नाम्नो नोऽनह्नः ।

९२ नामन्त्र्ये ।

९३ क्लीबे वा ।

९४ मावर्णान्तोपान्तापञ्चमवर्गान् मतोर्मो वः ।

९५ नाम्नि ।

९६ चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ।

९७ उदन्वानब्धौ च ।

९८ राजन्वान् सुराज्ञि ।

९९ नोर्म्यादिभ्यः ।

१०० मासनिशासनस्य शसादौ लुग्वा ।

१०१ दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतोदत्पन्नसहृदसनयू-

षन्नुदन्दोषन्यकञ्छ-
कन् वा ।
१०२ यस्वरे पादः पदाणि-
क्यघुटि ।
१०३ उदच उदीच् ।
१०४ अच्च् प्राग् दीर्घश्च ।
१०५ क्वसुष्मतौ च ।
१०६ श्वन्युवन्मघोनो ङी-
स्याद्यघुट्स्वरे व उः ।
१०७ लुगातोऽनापः ।
१०८ अनोऽस्य ।
१०९ ईङौ वा ।
११० षादिहन्धृतराज्ञोऽणि ।
१११ न वमन्तसंयोगात् ।
११२ हनो ह्नो घ्नः ।
११३ लुगस्यादेत्यपदे ।
११४ डित्यन्त्यस्वरादेः ।
११५ अवर्णादश्नोऽन्तो
वाऽतुरी ङ्योः ।
११६ श्यशवः ।
११७ दिव औः सौ ।
११८ उः पदान्तेऽनूत् ।

---

द्वितीयः पादः ।

१ क्रियाहेतुः कारकम् ।
२ स्वतन्त्रः कर्त्ता ।
३ कर्त्तुर्व्याप्यं कर्म ।
४ वा ऽकर्मणामणिक्कर्त्ता
णौ ।
५ गतिबोधाहारार्थशब्दक-
र्मनित्याऽकर्मणामनीखा-
द्यदिह्वाशब्दायक्रन्दाम् ।

६ भक्षेर्हिंसायाम् ।

७ वहेः प्रवेयः ।

८ हृक्रोर्नवा ।

९ दृश्यभिवदोरात्मने ।

१० नाथः ।

११ स्मृत्यर्थदयेशः ।

१२ कृगः प्रतियत्ने ।

१३ रुजाऽर्थस्याऽज्वरिसन्तापेर्भावे कर्त्तरि ।

१४ जासनाटक्राथपिषो हिंसायाम् ।

१५ निप्रेभ्यो घ्नः ।

१६ विनिमेयद्यूतपणं पणिव्यवहोः ।

१७ उपसर्गाद्दिवः ।

१८ न ।

१९ करणं च ।

२० अधेः शीङ्स्थास आधारः ।

२१ उपान्वध्याङ्वसः ।

२२ वाऽभिनिविशः ।

२३ कालाध्वभावदेशं वाऽकर्म्मचाकर्म्मणाम् ।

२४ साधकतमं करणम् ।

२५ कर्म्माभिप्रेयः संप्रदानम् ।

२६ स्पृहेर्व्याप्यं वा ।

२७ क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः ।

२८ नोपसर्गात् क्रुद्द्रुहा ।

२९ अपायेऽवधिरपादानम् ।

३० क्रियाश्रयस्याधारोऽधि-

करणम् ।

३१ नाम्नः प्रथमैकद्विबहौ।

३२ आमन्त्र्ये ।

३३ गौणात्समयानिकषाहाधिगन्तरान्तरेणातियेन-तेनैर्द्वितीया ।

३४ द्वित्वेऽधोऽध्युपरिभिः ।

३५ सर्वोभयाभिपरिणा तसा।

३६ लक्षणवीप्स्येत्थम्भूतेष्वभिना ।

३७ भागिनि च प्रतिपर्यनुभिः ।

३८ हेतुसहार्थेऽनुना ।

३९ उत्कृष्टेऽनूपेन ।

४० कर्म्माणि ।

४१ क्रियाविशेषणात् ।

४२ कालाध्वनोर्व्याप्तौ ।

४३ सिद्धौ तृतीया ।

४४ हेतुकर्तृकरणेत्थम्भूत-लक्षणे ।

४५ सहार्थे ।

४६ यद्भेदैस्तद्वदाख्या ।

४७ कृताद्यैः ।

४८ काले भान्नवाधारे ।

४९ प्रसितोत्सुकाऽवबद्धैः।

५० व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ।

५१ समो ज्ञोऽस्मृतौ वा ।

५२ दामः संप्रदानेऽधर्म्य-आत्मने च ।

५३ चतुर्थी ।

५४ तादर्थ्ये ।

५५ रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ।
५६ प्रत्याङः श्रुवाऽर्थिनि ।
५७ प्रत्यनोर्गृणाख्यातरि ।
५८ यद्वीक्ष्ये राधीक्षी ।
५९ उत्पातेन ज्ञाप्ये ।
६० श्लाघह्नुस्थाशपा प्रयोज्ये
६१ तुमोऽर्थे भाववचनात् ।
६२ गम्यस्याप्ये ।
६३ गतेर्नवाऽनाप्ते ।
६४ मन्यस्यानावादिभ्यो-ऽतिकुत्सने ।
६५ हितसुखाभ्याम् ।
६६ तद्भद्रायुष्यक्षेमार्थार्थे-नाशिषि ।
६७ परिक्रयणे ।
६८ शक्तार्थवषड्नमःस्व-स्तिस्वाहास्वधाभिः ।
६९ पञ्चम्यपादाने ।
७० आङावधौ ।
७१ पर्यपाभ्यां वर्ज्ये ।
७२ यतः प्रतिनिधिप्रतिदाने प्रतिना ।
७३ आख्यातर्युपयोगे ।
७४ गम्ययपः कर्माधारे ।
७५ प्रभृत्यन्यार्थदिक्शब्द-बहिरारादितरैः ।
७६ ऋणाद्धेतोः ।
७७ गुणादस्त्रियां नवा ।
७८ आरादर्थैः ।
७९ स्तोकाल्पकृच्छ्रकति-पयादसत्त्वे करणे ।

८० अज्ञाने ज्ञः षष्ठी ।
८१ शेषे ।
८२ रिरिष्टात्स्तादस्तादसतसाता ।
८३ कर्म्मणि कृतः ।
८४ द्विषो वाऽतृशः ।
८५ वैकत्र द्वयोः ।
८६ कर्त्तरि ।
८७ द्विहेतोरस्त्र्यणकस्य वा ।
८८ कृत्यस्य वा ।
८९ नोभयोर्हेतोः ।
९० तृन्नुदन्ताव्ययक्वस्वानातृश्शतृङिणकच्खलर्थस्य ।
९१ क्तयोरसदाधारे ।
९२ वा क्लीबे ।
९३ अकमेरुकस्य ।
९४ एष्यदृणेनः ।
९५ सप्तम्यधिकरणे ।
९६ नवा सुजर्थैः काले ।
९७ कुशलायुक्तेनासेवायाम् ।
९८ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ।
९९ व्याप्ये क्तेनः ।
१०० तद्युक्ते हेतौ ।
१०१ अप्रत्यादावसाधुना ।
१०२ साधुना ।
१०३ निपुणेन चार्चायाम् ।
१०४ स्वेशेऽधिना ।
१०५ उपेनाऽधिकिनि ।
१०६ यद्भावो भावलक्षणम् ।

१०७ गते गम्येऽध्वनोऽन्ते-
नैकार्थ्यं वा ।
१०८ षष्ठी वाऽनादरे ।
१०९ सप्तमी चाविभागे
निर्द्धारणे ।
११० क्रियामध्येऽध्वकाले
पञ्चमी च
१११ अधिकेन भूयसस्ते ।
११२ तृतीयाल्पीयसः ।
११३ पृथग्नाना पञ्चमी च।
११४ ऋते द्वितीया च ।
११५ विना ते तृतीया च ।
११६ तुल्यार्थैस्तृतीया-
षष्ठ्यौ ।
११७ द्वितीयाषष्ठ्यावेनेना-
नञ्चेः ।
११८ हेत्वर्थैस्तृतीयाद्याः ।
११९ सर्व्वादेः सर्व्वाः ।
१२० असत्त्वारादर्थाट्टाङ-
सिङ्यम् ।
१२१ जात्याख्यायां नवैको-
ऽसंख्यो बहुवत् ।
१२२ अविशेषणे द्वौ चास्मदः
१२३ फल्गुनीप्रोष्ठपदस्य भे ।
१२४ गुरावेकश्च ।

---

तृतीयः पादः ।

१ नमस्पुरसो गतेः कखपफि रः सः ।
२ तिरसो वा ।
३ पुंसः ।
४ शिरोऽधसः पदे समासैक्ये ।

५ अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य ।

६ प्रत्यये ।

७ रोः काम्ये ।

८ नामिनस्तयोः षः ।

९ निर्दुर्बहिराविष्प्रादुश्चतुराम् ।

१० सुचो वा ।

११ वेसुसोऽपेक्षायाम् ।

१२ नैकार्थेऽक्रिये ।

१३ समासेऽसमस्तस्य

१४ भ्रातुष्पुत्रकस्कादयः ।

१५ नाम्यन्तस्थाकवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेऽपि ।

१६ समासेऽग्नेः स्तुतः ।

१७ ज्योतिरायुर्भ्यां च स्तोमस्य ।

१८ मातृपितुः स्वसुः ।

१९ अलुपि वा ।

२० निनद्याः स्नातेः कौशले ।

२१ प्रतेः स्नातस्य सूत्रे ।

२२ स्नानस्य नाम्नि ।

२३ वेः स्नः ।

२४ अभिनिःष्टानः ।

२५ गवियुधेः स्थिरस्य ।

२६ एत्यकः ।

२७ भादितो वा ।

२८ विकुशमिपरेः स्थलस्य

२९ कपेर्गोत्रे ।

३० गोऽम्बाऽऽम्बसव्याप-

द्वित्रिभूम्याग्निशेकुशङ्कु-
क्वङ्गुमञ्जिपुञ्जिबर्हिः
परमेदिवेः स्थस्य ।
३१ निर्दुस्सोः ऽसेधसन्धि-
साम्नाम् ।
३२ प्रष्ठोऽग्रगे ।
३३ भीरुष्ठानादयः ।
३४ ह्रस्वान्नाम्नस्ति ।
३५ निसस्तपे ऽनासेवायाम्
३६ घस्वसः ।
३७ णिस्तोरेवाऽस्वदस्विद-
सहः षणिः ।
३८ सञ्जेर्वा ।
३९ उपसर्गात् सुगूसुवसो-
स्तुस्तुभोऽट्यप्यद्वित्वे ।
४० स्थासेनिसेधसिच्चसञ्जां
द्वित्वेऽपि ।
४१ अङ्प्रतिस्तब्धनिस्तब्धे
स्तम्भः ।
४२ अवाच्चाश्रयोर्जाविदूरे ।
४३ व्यवात् स्वनोऽशने ।
४४ सदोऽप्रतेः परोक्षायां
त्वादेः ।
४५ स्वञ्जश्च ।
४६ परिनिवेः सेवः ।
४७ सयसितस्य ।
४८ असोङसिवूसहस्सटाम् ।
४९ स्तुस्वञ्जश्चाटि नवा ।
५० निरभ्यनोश्च स्यन्द-
स्याप्राणिनि ।
५१ वेः स्कन्दोऽक्तयोः ।
५२ परेः ।

५३ निर्नेः स्फुरस्फुलोः ।

५४ वेः ।

५५ स्कभ्नः ।

५६ निर्दुःसुवेः समसूतेः ।

५७ अवः स्वपः ।

५८ प्रादुरुपसर्गाद्यस्वरेऽस्तेः ।

५९ न स्सः ।

६० सिचो यङि ।

६१ गतौ सेधः ।

६२ सुगः स्यसनि ।

६३ रषृवर्णान्नो ण एकपदे ऽनन्त्यस्यालचटतवर्गशसान्तरे ।

६४ पूर्वपदस्थान्नाम्न्यगः ।

६५ नसस्य ।

६६ निष्प्राऽग्रेऽन्तः खदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य ।

६७ द्वित्रिस्वरौषधिवृक्षेभ्यो नवा ऽनिरिकादिभ्यः ।

६८ गिरिनद्यादीनाम् ।

६९ पानस्य भावकरणे ।

७० देशे ।

७१ ग्रामाग्रान्नियः ।

७२ वाह्याद्वाहनस्य ।

७३ अतोऽह्नस्य ।

७४ चतुस्त्रेर्हायनस्य वयसि ।

७५ वोत्तरपदान्तनस्यादेरयुवपक्वाह्नः ।

७६ कवर्गैकस्वरवति ।

७७ अदुरुपसर्गान्तरो णहिनुमीनानेः ।

७८ नशः शः।

७९ नेर्ङ्मादापतपदनदगद-
वपीवहीशमूचिग्याति-
वातिद्रातिप्सातिस्यति-
हन्तिदेग्धौ।

८० अकखाद्यषान्ते पाठे वा।

८१ द्वित्वेऽप्यन्तेऽप्यनितेः
परेस्तु वा।

८२ हनः।

८३ वमि वा।

८४ निंसनिक्षनिन्दः कृति
वा।

८५ स्वरात्।

८६ नाम्यादेरेव ने।

८७ व्यञ्जनादेर्नाम्युपान्त्या-
द्वा।

८८ णेर्वा।

८९ निर्विण्णः।

९० न ख्यापूग्भूभाकमग-
मप्यायवेपो णेश्च।

९१ देशेऽन्तरोऽयनहनः।

९२ षात्पदे।

९३ पदेऽन्तरेऽनाङ्यतद्धिते।

९४ हनो घि।

९५ नृतेर्यङि।

९६ क्षुभ्नादीनाम्।

९७ पाठे धात्वादेर्णो नः।

९८ षः सोऽष्ट्यैष्ठिवष्वष्कः।

९९ ऋर लृलं कृपोऽकृपीटा-
दिषु।

१०० उपसर्गस्यायौ।

१०१ ग्रो यङि।

१०२ नवा स्वरे ।

१०३ परेर्घोऽङ्कयोगे ।

१०४ ऋफिडादीनां डश्च लः ।

१०५ जपादीनां पो वः ।

चतुर्थः पादः ।

१ स्त्रियां नृतोऽस्वस्रादेर्ङीः ।

२ अधातूदृदितः ।

३ अञ्चः ।

४ णस्वराऽघोषाद्वनो रश्च ।

५ वा बहुव्रीहेः ।

६ वा पादः ।

७ ऊध्नः ।

८ अशिशोः ।

९ संख्यादेर्हायनाद्वयसि ।

१० दाम्नः ।

११ अनो वा ।

१२ नाम्नि ।

१३ नोपान्त्यवतः ।

१४ मनः ।

१५ ताभ्यां वाप् डित् ।

१६ अजादेः ।

१७ ऋचि पादः पात्पदे ।

१८ आत् ।

१९ गौरादिभ्यो मुख्यान्ङीः ।

२० अणञेयेकण्नञ्स्नञ्-
टिताम् ।

२१ वयस्यनन्त्ये ।

२२ द्विगोः समाहारात् ।

२३ परिमाणात्तद्धितलुक्य-
विस्ताचितकम्बल्यात् ।

२४ काण्डात् प्रमाणादक्षेत्रे ।

२५ पुरुषाद्वा ।

२६ रेवतरोहिणाद्भे ।
२७ नीलात्प्राण्यौषध्योः ।
२८ क्ताच्च नाम्नि वा ।
२९ केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात् ।
३० भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरात् पक्वावपनस्थूलाऽकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ।
३१ नवा शोणादेः ।
३२ इतोऽक्त्यर्थात् ।
३३ पद्धतेः ।
३४ शक्तेः शस्त्रे ।
३५ स्वरादुतो गुणादखरोः ।
३६ श्येतैतहरितभरितरोहिताद्वर्णात्तो नश्च ।
३७ क्नः पलितासितात् ।
३८ असहनञ्विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः ।
३९ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ।
४० नखमुखादनाम्नि ।
४१ पुच्छात् ।
४२ कबरमणिविषशरादेः ।
४३ पक्षाच्चोपमानादेः ।
४४ क्रीतात् करणादेः ।
४५ क्तादल्पे ।

४६ स्वाङ्गादेरकृतमितजात-
प्रतिपन्नाद्बहुव्रीहेः ।
४७ अनाच्छादजात्यादेर्नवा।
४८ पत्युर्नः ।
४९ सादेः ।
५० सपत्न्यादौ ।
५१ ऊढायाम् ।
५२ पाणिगृहीतीति ।
५३ पतिवत्न्यन्तर्वत्न्यौ
भार्यागर्भिण्योः ।
५४ जातेरयान्तनित्यस्त्री-
शूद्रात् ।
५५ पाककर्णपर्णवालान्तात्।
५६ असत्काण्डप्रान्तशतै-
काञ्चः पुष्पात् ।
५७ असम्भस्त्राजिनैकशण-
पिण्डात्फलात् ।
५८ अनञो मूलात् ।
५९ धवाद्योगादपालका-
न्तात् ।
६० पूतक्रतुवृषाकप्यग्निकु-
सितकुसीदादै च ।
६१ मनोरौ च वा ।
६२ वरुणेन्द्ररुद्रभवशर्वमृ-
डादान् चान्तः ।
६३ मातुलाचार्योपाध्या-
याद्वा ।
६४ सूर्याद्देवतायां वा ।
६५ यवयवनारण्यहिमाद्दो-
षलिप्युरुमहत्त्वे ।
६६ आर्यक्षत्रियाद्वा ।
६७ यञो डायन् च वा ।

६८ लोहितादिशकलान्तात्।

६९ षावटाद्वा ।

७० कौरव्यमाण्डूकासुरेः ।

७१ इञ इतः ।

७२ नुर्जातेः ।

७३ उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ् ।

७४ बाह्वन्तकद्रुकमण्डलोर्नाम्नि ।

७५ उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः ।

७६ नारीसखीपङ्गुश्वश्रू ।

७७ यूनस्तिः ।

७८ अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः ।

७९ कुलाख्यानाम् ।

८० क्रौड्यादीनाम् ।

८१ भोजसूतयोः क्षत्रियायुवत्योः ।

८२ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ।

८३ ष्या पुत्रपत्योः केवलयोरीच् तत्पुरुषे ।

८४ बन्धौ बहुव्रीहौ ।

८५ मातमातृमातृके वा ।

८६ अस्य ड्यां लुक् ।

८७ मत्स्यस्य यः ।

८८ व्यञ्जनात्तद्धितस्य ।

८९ सूर्यागस्त्ययोरीये च ।

९० तिष्यपुष्ययोर्भाणि ।

९१ आपत्यस्य क्यच्व्योः ।
९२ तद्धितयस्वरेऽनाति ।
९३ बिल्वकीयादेरीयस्य ।
९४ न राजन्यमनुष्ययोरके ।
९५ ङ्यादेर्गौणस्याक्विपस्त-
द्धितलुक्यगोणीसूच्योः ।
९६ गोश्चान्ते ह्रस्वो ऽनंशि-
समासेयोबहुव्रीहौ ।
९७ क्लीबे ।
९८ वेदूतोऽनव्ययय्वृदीच्-
ङीयुवः पदे ।
९९ ङ्यापो बहुलं नाम्नि ।
१०० त्वे ।
१०१ भ्रुवोऽच्च कुंसकुट्योः ।
१०२ मालेषीकेष्टकस्यान्ते
ऽपि भारितूलचिते ।
१०३ गोण्या मेये ।
१०४ ङ्यादीदूतः के ।
१०५ न कचि ।
१०६ नवाऽऽपः ।
१०७ इच्चापुंसो ऽनित्क्या-
प्परे ।
१०८ स्वज्ञाऽजभस्त्राऽधातु-
त्ययकात् ।
१०९ द्व्येषसूतपुत्रवृन्दारकस्य ।
११० वौ वर्त्तिका ।
१११ अस्यायत्तत्क्षिपका-
दीनाम् ।
११२ नरिका मामिका ।
११३ तारकावर्णकाऽष्टका
ज्योतिस्तान्तवपितृदे-
वत्ये ।



# तृतीयोऽध्यायः ।

## प्रथमः पादः ।

१ धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थाऽतिवर्जः प्रादिरुपसर्गः प्राक् च ।

२ ऊर्याद्यनुकरणाच्विडाचश्च गतिः ।

३ कारिका स्थित्यादौ ।

४ भूषादरक्षेपेऽलंसदसत् ।

५ अग्रहाऽनुपदेशो ऽन्तरदः ।

६ कणेमनस्तृप्तौ ।

७ पुरोऽस्तमव्ययम् ।

८ गत्यर्थवदो ऽच्छः ।

९ तिरोऽन्तर्द्धौ ।

१० कृगो नवा ।

११ मध्येपदेनिवचनेमनस्युरस्यनत्याधाने ।

१२ उपाजेऽन्वाजे ।

१३ स्वाम्येऽधिः ।

१४ साक्षादादिश्च्व्यर्थे ।

१५ नित्यं हस्तेपाणावुद्वाहे ।

१६ प्राध्वं बन्धे ।

१७ जीविकोपनिषदौपम्ये ।

१८ नाम नाम्नैकार्थ्ये समासो बहुलम् ।

१९ सुज्वार्थे सङ्ख्या सङ्ख्येये सङ्ख्यया बहुव्रीहिः ।

२० आसन्नादूराधिकाध्यर्द्धार्द्धादिपूरणं द्वितीयाद्यन्यार्थे ।

२१ अव्ययम् ।

२२ एकार्थं चानेकं च ।

२३ उष्ट्रमुखादयः ।

२४ सहस्तेन ।

२५ दिशो रूढ्याऽन्तराले ।

२६ तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः ।

२७ नदीभिर्नाम्नि ।

२८ सङ्ख्या समाहारे ।

२९ वंश्येन पूर्वार्थे ।

३० पारेमध्येऽग्रेऽन्तः षष्ठ्या वा ।

३१ यावदियत्त्वे ।

३२ पर्यपाङ्बहिरच् पञ्चम्या

३३ लक्षणेनाभिप्रत्याभिमुख्ये ।

३४ दैर्घ्येऽनुः ।

३५ समीपे ।

३६ तिष्ठद्ग्वित्यादयः ।

३७ नित्यं प्रतिनाऽल्पे ।

३८ सङ्ख्याऽक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ।

३९ विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययाऽसंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकल्यान्तेऽव्ययम् ।

४० योग्यतावीप्सार्थानतिवृत्तिसादृश्ये ।

४१ यथाऽथा ।

४२ गतिक्वन्यस्तत्पुरुषः ।

४३ दुर्निन्दाकृच्छ्रे ।
४४ सुः पूजायाम् ।
४५ अतिरतिक्रमे च ।
४६ आङल्पे ।
४७ प्रात्यवपरिनिरादयो गतक्रान्तकुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः ।
४८ अव्ययं प्रवृद्धादिभिः ।
४९ ङस्युक्तं कृता ।
५० तृतीयोक्तं वा ।
५१ नञ् ।
५२ पूर्वापराधरोत्तरमभिन्नेनांशिना ।
५३ सायाह्नादयः ।
५४ समेंऽशेऽर्द्धं नवा ।
५५ जरत्यादिभिः ।
५६ द्वित्रिचतुष्पूरणाग्रादय ।
५७ कालोद्विगौ च मेयैः ।
५८ स्वयंसामी क्तेन ।
५९ द्वितीया खट्वा क्षेपे ।
६० कालः ।
६१ व्याप्तौ ।
६२ श्रितादिभिः ।
६३ प्राप्तापन्नौ तयात्त्व ।
६४ ईषद्गुणवचनैः ।
६५ तृतीया तत्कृतैः ।
६६ चतस्रार्द्धम् ।
६७ ऊनार्थपूर्वाद्यैः ।
६८ कारकं कृता ।
६९ न विंशत्यादिनैकोऽच्चान्तः ।
७० चतुर्थी प्रकृत्या ।

७१ हितादिभिः ।
७२ तदर्थार्थेन ।
७३ पञ्चमी भयाद्यैः ।
७४ क्तेनासत्त्वे ।
७५ परःशतादिः ।
७६ षष्ठ्ययत्नाच्छेषे ।
७७ कृति ।
७८ याजकादिभिः ।
७९ पत्तिरथौ गणकेन ।
८० सर्वपश्चादादयः ।
८१ अकेन क्रीडाजीवे ।
८२ न कर्त्तरि ।
८३ कर्मजा तृचा च ।
८४ तृतीयायाम् ।
८५ तृप्तार्थपूरणाव्ययाऽतृ-
शशत्रानशा ।
८६ ज्ञानेच्छार्चार्थाधारक्तेन।
८७ अस्वस्थगुणैः ।
८८ सप्तमी शौण्डाद्यैः ।
८९ सिंहाद्यैः पूजायाम् ।
९० काकाद्यैः क्षेपे ।
९१ पात्रेसमितेत्यादयः ।
९२ क्तेन ।
९३ तत्राहोरात्रांशम् ।
९४ नाम्नि ।
९५ कृत्येनावश्यके ।
९६ विशेषणं विशेष्येणै-
कार्थं कर्म्मधारयश्च
९७ पूर्वकालैकसर्वजरत्पुरा-
णनवकेवलम् ।
९८ दिगधिकं संज्ञातद्धितो-
त्तरपदे ।

९९ संख्या समाहारे च द्विगुश्चानाम्न्ययम् ।
१०० निन्द्यं कुत्सनैरपापाद्यैः।
१०१ उपमानं सामान्यैः ।
१०२ उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ।
१०३ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ।
१०४ श्रेण्यादि कृताद्यैश्च्व्यर्थे ।
१०५ क्तं नञादिभिन्नैः ।
१०६ सेट्नाऽनिटा ।
१०७ सन्महत्परमोत्तमोत्कृष्टं पूजायाम् ।
१०८ वृन्दारकनागकुञ्जरैः।
१०९ कतरकतमौ जातिप्रश्ने।
११० किं क्षेपे ।
१११ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयिणीप्रवक्तृश्रोत्रियाध्यायकधूर्त्तप्रशंसारूढैर्जातिः ।
११२ चतुष्पाद्गर्भिण्या ।
११३ युवा खलतिपलितजरद्वलिनैः ।
११४ कृत्यतुल्याख्यमजात्या ।
११५ कुमारः श्रमणादिना ।
११६ मयूरव्यंसकेत्यादयः ।
११७ चार्थे द्वन्द्वः सहोक्तौ ।
११८ समानामर्थेनैकः शेषः।
११९ स्यादावसंख्येयः ।

१२० त्यदादिः।
१२१ भ्रातृपुत्राः स्वसृदुहितृभिः।
१२२ पिता मात्रा वा।
१२३ श्वशुरः श्वश्रूभ्यां वा।
१२४ वृद्धो यूना तन्मात्रभेदे।
१२५ स्त्री पुंवच्च।
१२६ पुरुषः स्त्रिया।
१२७ ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः।
१२८ क्लीबमन्येनैकं च वा।
१२९ पुष्यार्थाद्भे पुनर्वसुः।
१३० विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः।
१३१ अश्ववडवपूर्वापराधरोत्तराः।
१३२ पशुव्यञ्जनानाम्।
१३३ तरुतृणधान्यमृगपक्षिणां बहुत्वे।
१३४ सेनाङ्गक्षुद्रजन्तूनाम्।
१३५ फलस्य जातौ।
१३६ अप्राणिपश्वादेः।
१३७ प्राणितुर्याङ्गाणाम्।
१३८ चरणस्य स्थेणोऽद्यतन्यामनुवादे।
१३९ अक्लीबेऽध्वर्युक्रतोः।
१४० निकटपाठस्य।
१४१ नित्यवैरस्य।
१४२ नदीदेशपुरां विलिङ्गानाम्।
१४३ पात्र्यशूद्रस्य।

१४४ गवाश्वादिः ।

१४५ न दधिपयआदिः ।

१४६ संख्याने ।

१४७ वान्तिके ।

१४८ प्रथमोक्तं प्राक् ।

१४९ राजदन्तादिषु ।

१५० विशेषणसर्व्वादि-
संख्यं बहुब्रीहौ ।

१५१ क्ताः ।

१५२ जातिकालसुखादेर्नवा।

१५३ आहिताग्न्यादिषु ।

१५४ प्रहरणात् ।

१५५ न सप्तमीन्द्वादिभ्यश्च ।

१५६ गड्वादिभ्यः ।

१५७ प्रियः ।

१५८ कडारादयः कर्म्मधा-
रये ।

१५९ धर्मार्थादिषु द्वन्द्वे ।

१६० लघ्वक्षरासखीदुत्स्व-
राद्यदल्पस्वरार्च्यमे-
कम् ।

१६१ मासवर्णभ्रात्रऽनुपूर्वम्।

१६२ भर्त्तुतुल्यस्वरम् ।

१६३ संख्या समासे ।

---

द्वितीयः पादः ।

१ परस्पराऽन्योऽन्येतरेतर-
स्याम् स्यादेर्वा पुंसि ।

२ अमव्ययीभावस्यातोऽ-
पञ्चम्याः ।

३ वा तृतीयायाः ।

४ सप्तम्या वा ।

५ ऋद्धनदीवंश्यस्य ।

६ अनतो लुप् ।

७ अव्ययस्य ।

८ ऐकार्थ्ये ।

९ न नाम्येकस्वरात् खित्युत्तरपदेऽमः ।

१० असत्त्वे ङसेः ।

११ ब्राह्मणाच्छंसी ।

१२ ओजोऽञ्जःसहोऽम्भस्तमस्तपसष्टः ।

१३ पुञ्जनुषोऽनुजान्धे ।

१४ आत्मनः पूरणे ।

१५ मनसश्चाज्ञायिनि ।

१६ नाम्नि ।

१७ परात्मभ्यां ङेः ।

१८ अद्यञ्जनात्सप्तम्या बहुलम् ।

१९ प्राक्कारस्य व्यञ्जने ।

२० तत्पुरुषे कृति ।

२१ मध्यान्ताद् गुरौ ।

२२ अमूर्द्धमस्तकात्स्वाङ्गादकामे ।

२३ बन्धे घञि नवा ।

२४ कालात्तनतरतमकाले ।

२५ शयवासिवासेष्वकालात् ।

२६ वर्षक्षरवराप्सरःशरोरोमनसो जे ।

२७ द्युप्रावृट्वर्षाशरत्कालात् ।

२८ अपो ययोनिमतिचरे ।

२९ नेन्सिद्धस्थे ।

३० षष्ठ्याः क्षेपे ।

३१ पुत्रे वा ।

३२ पश्यद्वाग्दिशो हरयुक्ति-
दण्डे ।

३३ अदसोऽकञायनणोः ।

३४ देवानांप्रियः ।

३५ शेपपुच्छलाङ्गूलेषु
नाम्नि शुनः ।

३६ वाचस्पतिवास्तोष्पति°
दिवस्पतिदिवोदासम् ।

३७ ऋतां विद्यायोनिसम्ब-
न्धे ।

३८ स्वसृपत्योर्वा ।

३९ आ द्वन्द्वे ।

४० पुत्रे ।

४१ वेदसहश्रुताऽवायुदेवता-
नाम् ।

४२ ईः षोमवरुणे ऽग्नेः ।

४३ इर्वृद्धिमत्यविष्णौ ।

४४ दिवो द्यावा ।

४५ दिवसूदिवः पृथिव्यां
वा ।

४६ उषासोषसः ।

४७ मातरपितरं वा ।

४८ वर्चस्कादिष्ववस्करादयः ।

४९ परतः स्त्री पुम्वत् स्त्र्ये-
कार्थेऽनूङ् ।

५० क्यङ्मानिपित्तद्धिते ।

५१ जातिश्च णितद्धितयस्वरे ।

५२ एयेऽग्नायी ।

५३ नाप्प्रियादौ ।

५४ तद्धिताककोपान्त्यपूर-
ण्याख्याः ।

५५ तद्धितः स्वरवृद्धिहेतुर-

रक्तविकारे ।

५६ स्वाङ्गान्ङीर्जातिश्चाऽमानिनि ।

५७ पुम्वत्कर्म्मधारये ।

५८ रिति ।

५९ त्वते गुणः ।

६० च्वौ क्वचित ।

६१ सर्वादयोऽस्यादौ ।

६२ मृगक्षीरादिषु वा ।

६३ ऋदुदित्तरतमरूपकल्पब्रुवचेलङ्गोत्रमतहते-वा ह्रस्वश्च ।

६४ ङ्यः ।

६५ भोगवद्गौरिमतोर्नाम्नि ।

६६ नवैकस्वराणाम् ।

६७ ऊङः ।

६८ महतः करघासविशिष्टे डाः ।

६९ स्त्रियाम् ।

७० जातीयैकार्थेऽच्वेः ।

७१ न पुम्वन्निषेधे ।

७२ इच्यस्वरे दीर्घ आच्च ।

७३ हविष्यष्टनः कपाले ।

७४ गवि युक्ते ।

७५ नाम्नि ।

७६ कोटरमिश्रकसिध्रकपुरगसारिकस्य वणे ।

७७ अञ्जनादीनां गिरौ ।

७८ अनजिरादिबहुस्वरशरादीनां मतौ ।

७९ ऋषौ विश्वस्य मित्रे ।

८० नरे ।

८१ वसुराटोः ।
८२ बलच्यपित्रादेः ।
८३ चितेः कचि ।
८४ स्वामिचिह्नस्याऽविष्टाऽष्टपञ्चभिन्नछिन्नाच्छिद्रश्रुवस्वस्तिकस्य कर्णे ।
८५ गतिकारकस्य नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ ।
८६ घञ्युपसर्गस्य बहुलम् ।
८७ नामिनः काशे ।
८८ दस्तिं ।
८९ अपील्वादेर्वहे ।
९० शुनः ।
९१ एकादशषोडशषोडत्षोढाषड्ढा ।
९२ द्वित्र्यष्टानां द्वात्रयोऽष्टाः प्राक्शतादनशीतिबहुव्रीहौ ।
९३ चत्वारिंशदादौ वा ।
९४ हृदयस्य हृल्लासलेखाण्ये।
९५ पदः पादस्याज्यातिगोपहते ।
९६ हिमहतिकाषिये पद् ।
९७ ऋचः श्शसि ।
९८ शब्दनिष्कघोषमिश्रे वा।
९९ नस् नासिकायास्तःक्षुद्रे ।
१०० येऽवर्णे ।
१०१ शिरसः शीर्षन् ।
१०२ केशे वा ।
१०३ शीर्षः स्वरे तद्धिते ।

१०४ उदकस्योदः पेषंधिवासवाहने ।

१०५ वैकव्यञ्जने पूर्ये ।

१०६ मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे वा ।

१०७ नाम्न्युत्तरपदस्य च ।

१०८ ते लुग्वा ।

१०९ द्व्यन्तरनवर्णोपसर्गादप ईप् ।

११० अनोर्देशे उप् ।

१११ खित्यनव्ययाऽरुषोर्मोऽन्तो ह्रस्वश्च ।

११२ सत्यागदास्तोः कारे ।

११३ लोकम्पृणमध्यन्दिनाऽनभ्यासमित्यम् ।

११४ भ्राष्ट्राग्नेरिन्धे ।

११५ अगिलाद्गिलगिलगिलयोः ।

११६ भद्रोष्णात्करणे ।

११७ नवाखित्कृदन्ते रात्रेः ।

११८ धेनोर्भव्यायाम् ।

११९ अषष्ठीतृतीयादन्याद्दोऽर्थे ।

१२० आशीराशास्थितास्थोत्सुकोतिरागे ।

१२१ ईयकारके ।

१२२ सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ ।

१२३ सहसमः सध्रिसमि ।

१२४ तिरसस्तिर्यति ।

१२५ नञत् ।

१२६ त्यादौ क्षेपे ।
१२७ नगोऽप्राणिनि वा ।
१२८ नखादयः ।
१२९ अन् स्वरे ।
१३० कोः कत्तत्पुरुषे ।
१३१ रथवदे ।
१३२ तृणे जातौ ।
१३३ कत्रि ।
१३४ काऽक्षपथोः ।
१३५ पुरुषे वा ।
१३६ अल्पे ।
१३७ काकवौ वोष्णे ।
१३८ कृत्ये ऽवश्यमोलुक् ।
१३९ समस्ततहिते वा ।
१४० तुमश्च मनःकामे ।
१४१ मांसस्यानड्घञि पचि नवा ।
१४२ दिक्शब्दात्तीरस्य तारः ।
१४३ सहस्य सोऽन्यार्थे ।
१४४ नाम्नि ।
१४५ अदृश्याधिके ।
१४६ अकालेऽव्ययीभावे ।
१४७ ग्रन्थाऽन्ते ।
१४८ नाशिष्यगोवत्सहले ।
१४९ समानस्य धर्मादिषु ।
१५० सब्रह्मचारी ।
१५१ दृग्दृशदृक्षे ।
१५२ अन्यत्यदादेराः ।
१५३ इदङ्किमीत्की ।
१५४ अनञः क्त्वो यप् ।
१५५ पृषोदरादयः ।
१५६ वावाप्योस्तनिक्रीधा-

## महोर्वपी ।

### तृतीयः पादः ।

१ वृद्धिरारैदौत् ।
२ गुणोऽरेदोत् ।
३ क्रियार्थो धातुः ।
४ न प्रादिरप्रत्ययः ।
५ अवौ दाधौ दा ।
६ वर्त्तमाना तिव् तस् अन्ति, सिव् थस् थ, मिव् वस् मस्; ते आते अन्ते, से आथे ध्वे, ए वहे महे ।
७ सप्तमी यात् यातां युस्, यास् यातं यात, यां याव याम; ईत ईयातां ईरन्, ईथास् ईयाथां ईध्वं, ईय ईवहि ईमहि।
८ पञ्चमी तुव् तां अन्तु, हि तं त, आनिव् आवव् आमव्; तां आतां अन्तां, स्व आथां ध्वं, ऐव् आवहैव् आमहैव्।
९ ह्यस्तनी दिव् तां अन्, सिव् तं त, अम्व् व म; त आतां अन्त, थास् आथां ध्वं, इ वहि महि।
१० एताः शितः ।
११ अद्यतनी दि तां अन् सि तं त, अम् व म; त आतां अन्त, थास् आथां ध्वं, इ वहि महि।
१२ परोक्षा णव् अतुस् उस्,

थव् अथुस् अ, णव् व म; ए आते इरे, से आथे ध्वे, ए वहे महे।

१३ आशीः क्यात् क्यास्तां क्यासुस्, क्यास् क्यास्तं क्यास्त, क्यासं क्यास्व क्यास्म; सीष्ट सीयास्तां सीरन्, सीष्ठास् सीयास्थां सीध्वं, सीय सीवहि सीमहि।

१४ श्वस्तनी ता तारौ तारस् तासि तास्थस् तास्थ, तास्मि तास्वस् तास्मस्; ता तारौ तारस्, तासे तासाथे ताध्वे, ताहे तास्वहे तास्महे।

१५ भविष्यन्ती स्यति स्यतस् स्यन्ति, स्यसि स्यथस् स्यथ, स्यामि स्यावस् स्यामस्; स्यते स्येते स्यन्ते, स्यसे स्येथे स्यध्वे, स्ये स्यावहे स्यामहे।

१६ क्रियातिपत्तिः स्यत् स्यतां स्यन्, स्यस् स्यतं स्यत, स्यं स्याव स्याम; स्यत स्येतां स्यन्त, स्यथास् स्येथां स्यध्वं, स्ये स्यावहि स्यामहि।

१७ त्रीणि त्रीण्यऽन्ययुष्मदस्मदि।

१८ एकद्विबहुषु।

१९ नवाद्यानि शतृक्वसू-

च परस्मैपदम् ।
२० पराणि कानानशौ चात्मनेपदम् ।
२१ तत्साप्यानाप्यात्कर्मभावे कृत्यक्तखलर्थाश्च ।
२२ इङितः कर्त्तरि ।
२३ क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसोह्वहश्चानन्योऽन्यार्थे ।
२४ निविशः ।
२५ उपसर्गादस्योहो वा ।
२६ उत्स्वराद्युजेरयज्ञतत्पात्रे ।
२७ परिव्यवात्क्रियः ।
२८ परावेर्जेः ।
२९ समः क्ष्णोः ।
३० अपस्किरः ।
३१ उदश्चरः साप्यात् ।
३२ समस्तृतीयया ।
३३ क्रीडोऽकूजने ।
३४ अन्वाङ्परेः ।
३५ शप उपलम्भने ।
३६ आशिषि नाथः ।
३७ भुनजोऽत्राणे ।
३८ हृगोगतताच्छील्ये ।
३९ पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः ।
४० कर्तृस्थामूर्त्ताप्यात् ।
४१ शदेः शिति ।
४२ म्रियतेरद्यतन्याशिषि च ।
४३ क्यङ्षो नवा ।
४४ द्युद्भ्योऽद्यतन्याम् ।
४५ वृद्भ्यः स्यसनोः ।

४६ कृपः श्वस्तन्याम् ।
४७ क्रमोऽनुपसर्गात् ।
४८ वृत्तिसर्गतायने ।
४९ परोपात् ।
५० वेः स्वार्थे ।
५१ प्रोपादारम्भे ।
५२ आङो ज्योतिरुद्गमे ।
५३ दागोऽस्वास्यप्रसारविकाशे ।
५४ नुप्रच्छः ।
५५ गमेः क्षान्तौ ।
५६ ह्वः स्पर्द्धे ।
५७ सन्निवेः ।
५८ उपात् ।
५९ यमः स्वीकारे ।
६० देवार्चामैत्रीसङ्गमपथिकर्त्तृकमन्त्रकरणे स्थः ।
६१ वा लिप्सायाम् ।
६२ उदोऽनूर्द्ध्वेहे ।
६३ संविप्रावात् ।
६४ ज्ञीप्सास्थेये ।
६५ प्रतिज्ञायाम् ।
६६ समो गिरः ।
६७ अवात् ।
६८ निह्नवे ज्ञः ।
६९ संप्रतेरस्मृतौ ।
७० अननोः सनः ।
७१ श्रुवोऽनाङ्प्रतेः ।
७२ स्मृदृशः ।
७३ शको जिज्ञासायाम् ।
७४ प्राग्वत् ।
७५ आमः कृगः ।

७६ गन्धनावक्षेपसेवासाहस-
प्रतियत्नप्रकथनोप-
योगे ।

७७ अधेः प्रसहने ।

७८ दीप्तिज्ञानयत्नविमत्युप-
सम्भाषोपमन्त्रणे वदः ।

७९ व्यक्तवाचां सहोक्तौ ।

८० विवादे वा ।

८१ अनोः कर्म्मण्यसति ।

८२ ज्ञः ।

८३ उपात्स्थः ।

८४ समोगमृच्छिप्रच्छिश्रु-
वित्स्वरत्यर्त्तिदृशः ।

८५ वेः कृगः शब्दे चानाशे ।

८६ आङोयमहनः स्वेऽङ्गे च

८७ व्युदस्तपः ।

८८ अणिक्कर्म णिक्कर्तृकाण्णि
गोऽस्मृतौ ।

८९ प्रलम्भे गृधिवञ्चेः ।

९० लीङ्लिनोऽर्चाभिभवे
चाच्चाकर्त्तर्य्यपि ।

९१ स्मिङः प्रयोक्तुः स्वार्थे ।

९२ बिभेतेर्भीष् च ।

९३ मिथ्याकृगोऽभ्यासे ।

९४ परिमुहायमायसपाट्धेवद
वसदमादरुचनृतः फल-
वति ।

९५ ईगितः ।

९६ ज्ञोऽनुपसर्गात् ।

९७ वदोऽपात् ।

९८ समुदाङोयमेरग्रन्थे ।

९९ पदान्तरगम्ये वा ।

१०० शेषात्परस्मै ।

१०१ परानोः कृगः ।

१०२ प्रत्यभ्यतेः क्षिपः ।

१०३ प्राद्वहः ।

१०४ परेर्मृषश्च ।

१०५ व्याङ्परे रमः ।

१०६ वोपात् ।

१०७ अणिगि प्राणिकर्त्तृकानाप्याण्णिगः ।

१०८ चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजनः ।

---

चतुर्थः पादः ।

१ गुपौधूपविच्छिपणिपनेरायः ।

२ कमेर्णिङ् ।

३ ऋतेर्ङीयः ।

४ अशविते वा ।

५ गुप्तिजोगर्हाक्षान्तौ सन् ।

६ कितः संशयप्रतीकारे ।

७ शान्दान्मान्बधान्निशानार्जवविचारवैरूप्ये दीर्घश्चेतः ।

८ धातोः कण्ड्वादेर्यक् ।

९ व्यञ्जनादेरेकस्वराद्भृशाभीक्ष्ण्ये यङ्वा ।

१० अट्यर्त्तिसूत्रिमूत्रिसूच्यशूर्णोः ।

११ गत्यर्थात्कुटिले ।

१२ गॄलुपसदचरजपजभदशदहो गर्ह्ये ।

१३ न गृणाशुभरुचः ।

१४ बहुलं लुप् ।
१५ अचि ।
१६ नोतः ।
१७ चुरादिभ्यो णिच् ।
१८ युजादेर्नवा ।
१९ भूङःप्राप्तौ णिङ् ।
२० प्रयोक्तृव्यापारे णिग् ।
२१ तुमर्हादिच्छायां सन्न-
तत्सनः ।
२२ द्वितीयायाः काम्यः ।
२३ अमाव्ययात्क्यन् च ।
२४ आधाराच्चोपमानादा-
चारे ।
२५ कर्तुः क्विप् गल्भक्ली-
बहोडात्तु ङित् ।
२६ क्यङ् ।
२७ सो वा लुक्च ।
२८ ओजोऽप्सरसः ।
२९ च्व्यर्थे भृशादेः स्तोः ।
३० डाच् लोहितादिभ्यः
षित् ।
३१ कष्टकक्षकृच्छ्रसत्रगह-
नाय पापे क्रमणे ।
३२ रोमन्थाद्व्याप्यादुच्चर्वणे ।
३३ फेनोष्मबाष्पधूमादुद्व-
मने ।
३४ सुखादेरनुभवे ।
३५ शब्दादेः कृतौ वा ।
३६ तपसः क्यन् ।
३७ नमोवरिवश्चित्रङोऽ-
र्चासेवाश्चर्ये ।
३८ अङ्गान्निरसने णिङ् ।

३९ पुच्छादुत्परिव्यसने ।
४० भाण्डात्समाचितौ ।
४१ चीवरात्परिधानार्जने ।
४२ णिज्बहुलं नाम्नः कृगादिषु ।
४३ व्रताङ्कुजितान्निवृत्त्योः ।
४४ सत्यार्थवेदस्याः ।
४५ श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् ।
४६ धातोरनेकस्वरादाम्परोक्षायाः कृभ्वस्ति चानु तदन्तम् ।
४७ दयायास्कासः ।
४८ गुरुनाम्यादेरनृच्छूर्णोः ।
४९ जागुषसमिन्धेर्नवा ।
५० भीह्रीभृहोस्तिव्वत् ।
५१ वेत्तेः कित् ।
५२ पञ्चम्याः कृग् ।
५३ सिजद्यतन्याम् ।
५४ स्पृशमृशकृषतृपदृपो वा ।
५५ हशिटोनाम्युपान्त्यादद्दृशोऽनिटः सक् ।
५६ श्लिषः ।
५७ नासत्वाश्लेषे ।
५८ णिश्रिद्रुस्रुकमः कर्त्तरि ङः ।
५९ ट्वेश्वेर्वा ।
६० शास्त्यऽसूवक्तिख्यातेरङ् ।
६१ सर्त्त्यर्त्तेर्वा ।

६२ ह्वालिप्सिचः ।
६३ वात्मने ।
६४ लृदिद्द्युतादिपुष्यादेः परस्मै ।
६५ ऋदिच्छ्विस्तम्भूम्रुचूम्लुचूग्रुचूग्लुचूग्लुंचूज्रो वा।
६६ ञिच् ते पदस्तलुक्च ।
६७ दीपजनबुधिपूरितायिप्यायो वा ।
६८ भावकर्मणोः ।
६९ स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिड् वा ।
७० क्यः शिति ।
७१ कर्त्तर्यनद्भ्यः शव् ।
७२ दिवादेः श्यः ।
७३ भ्रासभ्लासभ्रमक्रमक्लमत्रसित्रुटिलषियसिसंयसेर्वा ।
७४ कुषिरञ्जेर्व्याप्ये वा परस्मै च ।
७५ स्वादेः श्नुः ।
७६ वाऽक्षः ।
७७ तक्षः स्वार्थे वा ।
७८ स्तम्भूस्तुम्भूस्कम्भूस्कुम्भूस्कोः श्ना च ।
७९ क्र्यादेः ।
८० व्यञ्जनाच्छ्नाहेरानः ।
८१ तुदादेः शः ।
८२ रुधां स्वराच्छ्नो नलुक्च
८३ कृग्तनादेरुः ।
८४ सृजः श्राद्धे ञिक्यात्मने

तथा ।
८५ तपेस्तपः कर्म्मकात् ।
८६ एकधातौ कर्मक्रियये-
काऽकर्मक्रिये ।
८७ पचिदुहेः ।
८८ न कर्मणा ञिच्
८९ रुधः ।
९० स्वरदुहो वा ।
९१ तपः कर्त्रनुतापे च ।
९२ णिस्नुश्र्यात्मनेपदाक-
र्म्मकात् ।
९३ भूषार्थसन्किरादिभ्यश्च
ञिक्यौ ।
९४ करणक्रियया क्वचित् ।



## चतुर्थोऽध्यायः ।

### प्रथमः पादः ।

१ द्विर्धातुः परोक्षाङेप्राक्तु
स्वरे स्वरविधेः ।
२ आद्योंऽश एकस्वरः ।
३ सन्यङश्च
४ स्वरादेर्द्वितीयः ।
५ न बदनं संयोगादिः ।
६ अयि रः ।
७ नाम्नो द्वितीयाद्यथेष्टम् ।
८ अन्यस्य ।
९ कण्ड्वादेस्तृतीयः ।
१० पुनरेकेषाम् ।

११ यिः सन्वेर्ष्यः ।

१२ ह्वः शिति ।

१३ चराचरचलाचलपतापतवदावदघनाघनपाटूपटं वा ।

१४ चिक्लिदचक्नसम् ।

१५ दास्वत्साह्वन्मीढ्वत् ।

१६ ज्ञप्यापो ज्ञीपीप् न च द्विः सि सनि ।

१७ ऋध ईर्त् ।

१८ दम्भो धिप्धीप् ।

१९ अव्याप्यस्य मुचेर्मोग्वा ।

२० मिमीमादामित्स्वरस्य ।

२१ रभलभशकपतपदामिः ।

२२ राधेर्वधे ।

२३ अवित्परोक्षासेट्थवोरेः ।

२४ अनादेशादेरेकव्यञ्जनमध्येऽतः ।

२५ तॄत्रपफलभजाम् ।

२६ जॄभ्रमवमत्रसफणस्यमस्वनराजभ्राजभ्रासभ्लासो वा ।

२७ वा श्रन्थग्रन्थो न्लुक् च ।

२८ दम्भः ।

२९ थे वा ।

३० न शसददवादिगुणिनः ।

३१ ह्रौ दः ।

३२ देर्दिगिः परोक्षायाम् ।

३३ ङे पिबः पीप्य् ।

३४ अङे हिहनो हो घः पूर्वात् ।

३५ जेर्गिः सन्परोक्षयोः ।

३६ चेः किर्वा ।

३७ पूर्वस्यास्वे स्वरे य्वोरि-
युव्।
३८ ऋतोऽत्।
३९ ह्रस्वः।
४० गहोर्जः।
४१ द्युतेरिः।
४२ द्वितीयतुर्ययोः पूर्वौ।
४३ तिर्वा ष्ठिवः।
४४ व्यञ्जनस्याऽनादेर्लुक्।
४५ अघोषे शिटः।
४६ कङश्चञ्।
४७ न कवतेर्यङः।
४८ आगुणावन्यादेः।
४९ न हाको लुपि।
५० वञ्चस्रंसध्वंसभ्रंसकस-
पतपदस्कन्दोऽन्तो नीः।
५१ मुरतोऽनुनासिकस्य।
५२ जपजभदहदशभञ्जपशः।
५३ चरफलाम्।
५४ ति चोपान्त्यातोऽनोदुः।
५५ ऋमतां रीः।
५६ रिरौ च लुपि।
५७ निजां शित्येत्।
५८ पृभृमाहाङामिः।
५९ सन्यस्य।
६० ओर्जान्तस्थापवर्गे ऽवर्णे।
६१ श्रुस्रुद्रुप्रुप्लुच्योर्वा।
६२ स्वपो णावुः।
६३ असमानलोपे सन्वल्लु-
घुनि ङे।
६४ लघोर्दीर्घोऽस्वरादेः।
६५ स्मृदृत्वरप्रथम्रदस्तृस्प-

शेरः ।

६६ वा वेष्टचेष्टः ।

६७ ई च गणः ।

६८ अस्यादेराः परोक्षायाम् ।

६९ अनातो नश्चान्त ऋदाद्यशौसंयोगस्य ।

७० भूस्वपोरदुतौ ।

७१ ज्याव्येव्यधिव्यचिव्यथेरिः ।

७२ यजादिवश्वचः सस्वरान्तस्था य्वृत् ।

७३ न वयो य्

७४ वेरयः ।

७५ अविति वा ।

७६ ज्यश्च यपि ।

७७ व्यः ।

७८ संपरेर्वा ।

७९ यजादिवचेः किति ।

८० स्वपेर्यङ्ङे च ।

८१ ज्याव्यधः क्ङिति ।

८२ व्यचोऽनसि ।

८३ वशोरयङि ।

८४ ग्रहव्रश्चभ्रस्जप्रच्छः ।

८५ व्येस्यमोर्यङि ।

८६ चायः कीः ।

८७ ह्विते ह्वः ।

८८ णौ ङसनि ।

८९ श्वेर्वा ।

९० वा परोक्षायङि ।

९१ प्यायः पीः ।

९२ क्तयोरनुपसर्गस्य ।

९३ आङोऽन्धूधसोः ।

९४ स्फायः स्फी वा ।
९५ प्रसमः स्त्यः स्तीः ।
९६ प्रात्तश्च मो वा ।
९७ श्यः शीर्द्रवमूर्त्तिस्पर्शे नश्चास्पर्शे ।
९८ प्रतेः ।
९९ वाऽभ्यवाभ्याम् ।
१०० श्रः शृतं हविःक्षीरे ।
१०१ श्रपेः प्रयोक्त्रैक्ये ।
१०२ ग्वृत्सकृत ।
१०३ दीर्घमवोऽन्त्यम् ।
१०४ स्वरहन्गमोः सनि धुटि ।
१०५ तनो वा ।
१०६ क्रमः क्त्वि वा ।
१०७ अहन्पञ्चमस्य क्विक्ङिति ।
१०८ अनुनासिके च च्छ्वः शूट् ।
१०९ मव्यविश्रिविज्वरित्वरेरुपान्त्येन ।
११० राल्लुक् ।
१११ क्तेऽनिटश्चजोः कगौ घिति ।
११२ न्यङ्कूद्गमेघादयः ।
११३ न वञ्चेर्गतौ ।
११४ यजेर्यज्ञाङ्गे ।
११५ ण्यण्यावश्यके ।
११६ निप्राद्युजः शक्ये ।
११७ भुजो भक्ष्ये ।
११८ त्यज्यजप्रवचः ।
११९ वचोऽशब्दनाम्नि ।

१२० भुजन्युब्जं पाणिरोगे ।

१२१ वीरुन्न्यग्रोधौ ।

द्वितीयः पादः ।

१ आत्सन्ध्यक्षरस्य ।

२ न शिति ।

३ व्यस्थवृणवि ।

४ स्फुरस्फुलोर्घञि ।

५ वापगुरो णमि ।

६ दीङः सनि वा ।

७ यबऽक्ङिति ।

८ मिग्मीगोऽखलचालि ।

९ लीङ्लिनोर्वा ।

१० णौ क्रीजीङः ।

११ सिध्यतेरज्ञाने ।

१२ चिस्फुरोर्नवा ।

१३ वियः प्रजने ।

१४ रुहः पः ।

१५ लियो नोऽन्तः स्नेहद्रवे ।

१६ लो लः ।

१७ पातेः ।

१८ धूग्प्रीगोर्नः ।

१९ वो विधूनने जः ।

२० पाशाछासावेव्याह्वो यः ।

२१ अर्त्तिरीब्लीह्रीक्नूयि-
क्ष्माय्यातां पुः ।

२२ स्फायः स्फाव् ।

२३ शादिरगतौ शात् ।

२४ घटादेर्ह्रस्वो दीर्घस्तु वा
ञिणम्परे ।

२५ कगेवनूजनैजृष्क्नसञ्जः ।

२६ अमोऽकम्यमिचमः ।

२७ पर्यपात् स्खदः ।

२८ शमोऽदर्शने ।

२९ यमोऽपरिवेषणे णिचि च।

३० मारणतोषणनिशाने ज्ञश्च ।

३१ चहणः शाठ्ये ।

३२ ज्वलह्वलह्मलग्लास्नाव-नूवमनमोऽनुपसर्गस्य वा ।

३३ छदेरिस्मन्त्रट् क्वौ ।

३४ एकोपसर्गस्य च घे ।

३५ उपान्त्यस्यासमानलोपि शास्वृदितो ङे ।

३६ भ्राजभासभाषदीपपीड-जीवमीलकणरणवणभ-णश्रणह्वेहेठलुटलुपलपां नवा ।

३७ ऋद्दवर्णस्य ।

३८ जिघ्रतेरिः ।

३९ तिष्ठतेः ।

४० ऊद्दुषो णौ।

४१ चित्ते वा ।

४२ गोहः स्वरे ।

४३ भुवो वः परोक्षाद्यतन्योः।

४४ गमहनजनखनघसः स्व-रेऽनङि क्ङिति लुक् ।

४५ नो व्यञ्जनस्यानुदितः।

४६ अञ्चोऽनर्चायाम् ।

४७ लङ्गिकम्प्योरुपतापाङ्ग-विकृत्योः ।

४८ भञ्जेञौ वा ।

४९ दंशसञ्जः शवि ।

५० अकट्घिनोश्च रञ्जेः ।
५१ णौ मृगरमणे ।
५२ घञि भावकरणे ।
५३ स्यदो जवे ।
५४ दंशनाऽवोदैधोद्मप्रश्रथहिमश्रथम् ।
५५ यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति ।
५६ यपि ।
५७ वा मः ।
५८ गमां क्वौ ।
५९ न तिकि दीर्घश्च ।
६० आः खनिसनिजनः ।
६१ सनि ।
६२ ये नवा ।
६३ तनः क्ये ।
६४ तौ सनस्तिकि ।
६५ वन्याङ्पञ्चमस्य ।
६६ अपाच्चायश्चिः क्तौ ।
६७ ह्लादो ह्लद् क्तयोश्च ।
६८ ऋल्वादेरेषां तो नोऽप्रः ।
६९ रदादमूर्च्छमदः क्तयोर्दस्य च ।
७० सूयत्याद्योदितः ।
७१ व्यञ्जनान्तस्थातोऽख्याध्यः ।
७२ पूदिव्यञ्चेर्नाशाद्यूताऽनपादाने ।
७३ सेर्ग्रासे कर्म्मकर्त्तरि ।
७४ क्षेः क्षीचाऽध्यार्थे ।
७५ वाऽऽक्रोशदैन्ये ।

७६ ऋह्रीघ्राध्रात्रौंदनुदविन्तेर्वा ।

७७ दुगोरू च ।

७८ क्षैशुषिपचो मकवम् ।

७९ निर्वाणमऽवाते ।

८० अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः ।

८१ भित्तं शकलम् ।

८२ वित्तं धनप्रतीतम् ।

८३ हुधुटो हेर्धिः ।

८४ शासऽसूहनः शाध्येधिजहि ।

८५ अतः प्रत्ययाल्लुक् ।

८६ असंयोगादोः ।

८७ वम्यऽविति वा ।

८८ कृगो यि च ।

८९ अतः शित्युत् ।

९० श्नास्त्योर्लुक् ।

९१ वा द्विषातोऽनः पुस् ।

९२ सिज्विदोऽभुवः ।

९३ द्व्युक्तजक्षपञ्चतः ।

९४ अन्तो नो लुक् ।

९५ शौ वा ।

९६ श्नश्चातः ।

९७ एषामीर्व्यञ्जनेऽदः ।

९८ इर्दरिद्रः ।

९९ भियो नवा ।

१०० हाकः ।

१०१ आ च हौ ।

१०२ यि लुक् ।

१०३ ओतः श्ये ।

१०४ जा ज्ञाजनोऽत्यादौ ।
१०५ प्वादेर्ह्रस्वः ।
१०६ गमिषद्यमश्छः ।
१०७ वेगे सर्त्तेर्धाव् ।
१०८ श्रौतिकृवुधिवुपाघ्राध्मास्थाम्नादाम्दृश्यर्त्तिशदसदः शृकृधिपिबाजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदम् ।
१०९ क्रमो दीर्घः परस्मै ।
११० ष्ठिवुक्लम्वाचमः ।
१११ शमसप्तकस्य श्ये ।
११२ ष्ठिवूसिवोऽनटि वा ।
११३ मव्यस्याः ।
११४ अनतोऽन्तोऽदात्मने ।
११५ शीङोरत् ।
११६ वेत्तेर्नवा ।
११७ तिवां णवः परस्मै ।
११८ ब्रूगः पञ्चानां पञ्चाहश्च ।
११९ आशिषि तुह्योस्तातङ् ।
१२० आतो णव औः ।
१२१ आतामाते आथामाथे आदिः ।
१२२ यः सप्तम्याः ।
१२३ याम्युसो रियमियुसौ ।

---

तृतीयः पादः ।

१ नामिनो गुणोऽक्ङिति ।
२ उश्नोः ।
३ पुस्पौ ।
४ लघोरुपान्त्यस्य ।
५ मिदः श्ये ।

६ जागुः किति।

७ ऋवर्णदृशोऽङि।

८ स्कृच्छृतोऽकि परोक्षायाम्।

९ संयोगादृदर्त्तेः।

१० क्ययङाशीर्ये।

११ न वृद्धिश्चाविति क्ङिल्लोपे।

१२ भवतेः सिज्लुपि।

१३ सूतेः पञ्चम्याम्।

१४ द्व्युक्तोपान्त्यस्य शिति स्वरे।

१५ ह्विणोरप्विति व्यौ।

१६ इको वा।

१७ कुटादेर्ङिद्वदञ्णित्।

१८ विजेरिट्।

१९ वोर्णोः।

२० शिदऽवित्।

२१ इन्ध्यऽसंयोगात्परोक्षा किद्वत्।

२२ स्वञ्जेर्नवा।

२३ जनशोन्युपान्त्ये तादिः क्त्वा।

२४ ऋत्तृषमृषकृशवञ्चलुञ्चथफः सेट्।

२५ वौ व्यञ्जनादेः सन्चाऽय्वः।

२६ उतिशवर्हाञ्च्यः क्तौ भावारम्भे।

२७ न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः।

२८ मृषः क्षान्तौ।

२९ क्त्वा।

३० स्कन्दस्यन्दः ।

३१ क्षुधक्लिशकुषगुधमृड-
मृदवदवसः ।

३२ रुदविदमुषग्रहस्वपप्रच्छः
सन् च ।

३३ नामिनोऽनिट् ।

३४ उपान्त्ये ।

३५ सिजाशिषावात्मने ।

३६ ऋवर्णात् ।

३७ गमो वा ।

३८ हनः सिच् ।

३९ यमः सूचने ।

४० वा स्वीकृतौ ।

४१ इश्च स्थादः ।

४२ मृजोऽस्य वृद्धिः ।

४३ ऋतः स्वरे वा ।

४४ सिचि परस्मै समान-
स्याङिति ।

४५ व्यञ्जनानामनिटि ।

४६ वोर्णुगः सेटि ।

४७ व्यञ्जनादेर्वोपान्त्यस्या-
तः ।

४८ वदव्रजलः ।

४९ न श्विजागृशसक्षणह्म्ये-
दितः ।

५० ञ्णिति ।

५१ नामिनोऽकलिहलेः ।

५२ जागुर्ञिणवि ।

५३ आत ऐः कृञ्चौ ।

५४ न जनवधः ।

५५ मोऽकमियमिरमिनमिग-
मिवमाचमः ।

५६ विश्रमेर्वा ।
५७ उद्यमोपरमौ ।
५८ णिद्वाऽन्त्यो णव् ।
५९ उत औविंति व्यञ्जने-ऽद्वेः ।
६० वोर्ण्णोः ।
६१ न दिस्योः ।
६२ तृहः श्नादीत् ।
६३ ब्रूतः परादिः ।
६४ यङ्तुरुस्तोर्बहुलम् ।
६५ सः सिजस्तेर्दिस्योः ।
६६ पिबैतिदाभूस्थः सिचो लुप् परस्मै न चेट् ।
६७ ट्धेघ्राशाच्छासो वा ।
६८ तन्भ्यो वा तथासि ञ्णोश्च ।
६९ सनस्तत्रा वा ।
७० धुट् ह्रस्वाल्लुगनिट-स्तथोः ।
७१ इट ईति ।
७२ सो धि वा ।
७३ अस्तेः सिहस्त्वेति ।
७४ दुहदिहलिहगुहो दन्त्या-त्मने वा सकः ।
७५ स्वरेऽतः ।
७६ दरिद्रोऽद्यतन्यां वा ।
७७ अशित्यस्सन्णकच्ण-कानटि ।
७८ व्यञ्जनाद् देः सश्च दः ।
७९ सेः सद्धाञ्च रुर्वा ।
८० योऽशिति ।
८१ क्यो वा ।

८२ अतः ।
८३ णेरनिटि ।
८४ सेट्क्तयोः ।
८५ आमन्ताल्वाय्येत्न्वावय् ।
८६ लघोर्यपि ।
८७ वाऽऽप्नोः ।
८८ मेङो वा मित् ।
८९ क्षेः क्षीः ।
९० क्षय्यजय्यौ शक्तौ ।
९१ क्रय्यः क्रयार्थे ।
९२ सस्तः सि ।
९३ दीय् दीङः क्ङिति स्वरे ।
९४ इडेत्पुसि चातो लुक् ।
९५ संयोगादेर्वा शिष्ये: ।
९६ गापास्थासादामाहाकः ।
९७ ईर्व्यञ्जनेऽयपि ।
९८ घ्राध्मोर्यङि ।
९९ हनो घ्नीर्वधे ।
१०० ञ्णिति घात् ।
१०१ ञिणवि घन् ।
१०२ नशेर्नेश्वा ऽङि ।
१०३ श्वयत्यसूवचपतः श्वास्थवोचपतम् ।
१०४ शीङ एः शिति ।
१०५ क्ङिति यि शय् ।
१०६ उपसर्गादूहो ह्रस्वः ।
१०७ आशिषीणः ।
१०८ दीर्घश्च्वियङ्यक्क्येषु च ।
१०९ ऋतो रीः ।
११० रिः शक्याशीर्ये ।

१११ ईश्च्वाववर्णस्याऽनव्ययस्य ।

११२ क्यनि ।

११३ क्षुत्तृड्गर्द्धेऽशनायोदन्यधनायम् ।

११४ वृषाश्वान्मैथुने स्सोऽन्तः ।

११५ अश्व लौल्ये ।

---

चतुर्थः पादः ।

१ अस्तिब्रुवोर्भूवचावशिति ।

२ अघञ्क्यबलच्यजेर्वी ।

३ त्रने वा ।

४ चक्षो वाचि क्शांग् ख्यांग् ।

५ नवा परोक्षायाम् ।

६ भृज्जो भर्ज् ।

७ प्राद्दागस्त आरम्भे क्ते ।

८ निविस्वन्ववात् ।

९ स्वरादुपसर्गाद्दस्तिकित्यधः ।

१० दत् ।

११ दोसोमास्थ इः ।

१२ छाशोर्वा ।

१३ शो व्रते ।

१४ हाको हिः क्त्वि ।

१५ धागः ।

१६ यपि चादो जग्ध् ।

१७ घस्लृसनद्यतनीघञचऽलि ।

१८ परोक्षायां नवा ।

१९ वेर्वय्।
२० ऋः शॄदॄप्रः।
२१ हनो वध आशिष्यऽञौ
२२ अद्यतन्यां वा त्वात्मने।
२३ इणिकोर्गा।
२४ णावज्ञाने गमुः।
२५ सनीङश्च।
२६ गाः परोक्षायाम्।
२७ णौ सन्ङे वा।
२८ वाऽद्यतनीक्रियातिपत्त्योर्गीङ्।
२९ अड्धातोरादिर्ह्यस्तन्यां चामाङा।
३० एत्यस्तेर्वृद्धिः।
३१ स्वरादेस्तासु।
३२ स्ताद्यशितोऽत्रोणादेरिट्।
३३ तेर्ग्रहादिभ्यः।
३४ गृह्णोऽपरोक्षायां दीर्घः।
३५ वृतो नवा ऽनाशीःसिच्परस्मै च।
३६ इट्सिजाशिषोरात्मने।
३७ संयोगादृतः।
३८ धूगौदितः।
३९ निष्कुषः।
४० क्तयोः।
४१ जॄव्रश्चः क्त्वः।
४२ ऊदितो वा।
४३ क्षुधवसस्तेषाम्।
४४ लुभ्यञ्चेर्विमोहार्चे।
४५ पुङ्क्लिशिभ्यो नवा।
४६ सहलुभेच्छरुषरिषस्तादेः।
४७ इवृधभ्रस्जदम्भश्रियूर्णु

भरज्ञपिसनितनिपति-
वृङ्वरिद्रः सनः ।
४८ ऋस्मिपूङ्ञ्जशौकृगृदृ-
धृप्रच्छः ।
४९ हनृतः स्यस्य ।
५० कृतचृतनृतच्छृदतृदो-
ऽसिचः सादेर्वा ।
५१ गमोऽनात्मने ।
५२ स्नोः ।
५३ क्रमः ।
५४ द्रुः ।
५५ न वृद्भ्यः ।
५६ एकस्वरादनुस्वारेतः ।
५७ ऋवर्णश्र्यूर्णुगः
कितः ।
५८ उवर्णात् ।
५९ ग्रहगुहश्च सनः ।
६० स्वार्थे ।
६१ डीयश्व्यैदितः क्तयोः ।
६२ वेटोऽपतः ।
६३ सन्निवेरर्दः ।
६४ अविदूरेऽभेः ।
६५ वृत्तेर्वृत्तं ग्रन्थे ।
६६ धृषशसः प्रगल्भे ।
६७ कषः कृच्छ्रगहने ।
६८ घुषेरविशब्दे ।
६९ बलिस्थूले दृढः ।
७० क्षुब्धविरिब्धस्वान्तध्वा-
न्तलग्नम्लिष्टफाण्टबाढ-
परिवृढं मन्थस्वरमन-
स्तमःसक्ताऽस्पष्टाऽना-
यासभृशप्रभौ ।

७१ आदितः ।

७२ नवा भावारम्भे ।

७३ शकः कर्म्मणि ।

७४ णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तम् ।

७५ श्वसजपवमरुषत्वरसंघुषास्वनामः ।

७६ हृषेः केशलोमविस्मयप्रतिघाते ।

७७ अपचितः ।

७८ सृजिदृशिस्कृस्वराऽत्वतस्तृज्नित्यानिटस्थवः ।

७९ ऋतः ।

८० ऋवृव्येऽद इट् ।

८१ स्क्रऽसृवृभृस्तुद्रुश्रुस्रोर्व्यञ्जनादेः परोक्षायाः ।

८२ घसेकस्वरातः क्वसोः ।

८३ गमहनविद्लृविशदृशो वा ।

८४ सिचोऽञ्जेः ।

८५ धूग्सुस्तोः परस्मै ।

८६ यमिरमिनम्यातः सोऽन्तश्च ।

८७ ईशीडः सेध्वेस्वध्वमोः ।

८८ रुत्पञ्चकाच्छिदयः ।

८९ दिस्योरीट् ।

९० अदश्चाट् ।

९१ संपरेः कृगः स्सट् ।

९२ उपाद्भूषासमवायप्रतियत्नविकारवाक्याऽध्याहारे ।

९३ किरो लवने ।

९४ प्रतेश्च वधे ।

९५ अपाच्चतुष्पात्पक्षिशुनि हृष्टान्नाश्रयार्थे ।

९६ वौ विष्किरो वा ।

९७ प्रात्तुम्पतेर्गवि ।

९८ उदितः स्वरान्नोऽन्तः ।

९९ मुचादितृफदृफगुफशुभोऽभः शे ।

१०० जभः स्वरे ।

१०१ रध इटि तु परोक्षायामेव।

१०२ रभोऽपरोक्षाशवि ।

१०३ लभः ।

१०४ आङो यि ।

१०५ उपात्स्तुतौ ।

१०६ ञिख्णमोर्वा ।

१०७ उपसर्गात् खल्घञोश्च।

१०८ सुदुर्भ्यः ।

१०९ नशो धुटि ।

११० मस्जेः सः ।

१११ अः सृजिदृशोऽकिति।

११२ स्पृशादिसृपो वा ।

११३ ह्रस्वस्य तः पित्कृति ।

११४ अतो म आने ।

११५ आसीनः ।

११६ ऋतां क्ङितीर् ।

११७ ओष्ठ्यादुर् ।

११८ इसासः शासो ऽङ्व्यञ्जने ।

११९ क्वौ ।

१२० आङः ।

१२१ य्वोः प्वय्व्यञ्जनेलुक्

१२२ कृतः कीर्त्तिः ।

# पञ्चमोऽध्यायः ।

---

## प्रथमः पादः ।

१ आतुमोऽत्यादिः कृत् ।

२ बहुलम् ।

३ कर्त्तरि ।

४ व्याप्ये घुरकेलिमकृष्ट-
पच्यम् ।

५ संगतेऽजर्यम् ।

६ रुच्याऽव्यथ्यवास्तव्यम् ।

७ भव्यगेयजन्यरम्यापा-
त्याप्लाव्यं नवा ।

८ प्रवचनीयादयः ।

९ श्लिषशीङ्स्थासवसज-
नरुहजॄभजेः क्तः ।

१० आरम्भे ।

११ गत्यर्थाऽकर्मकपिबभुजेः ।

१२ अद्यर्थाच्चाधारे ।

१३ क्त्वातुमम् भावे ।

१४ भीमादयोऽपादाने ।

१५ संप्रदानाच्चान्यत्रोणा-
दयः ।

१६ असरूपोऽपवादे वोत्स-
र्गः प्राक् क्तेः ।

१७ ऋवर्णव्यञ्जनान्ताद्
घ्यण् ।

१८ पाणिसमवाभ्यां सृजः ।

१९ उवर्णादावश्यके ।

२० आसुयुवपिरपिलपित्र-
पिडिपिदभिचम्याननमः ।

२१ वाऽऽधारेऽमावास्या ।
२२ संचाय्यकुण्डपाय्यराजसूयं क्रतौ ।
२३ प्रणाय्यो निष्कामासंमते ।
२४ धाय्यापाय्यसान्नाय्यनिकाय्यमृङ्मानहविर्निवासे ।
२५ परिचाय्योपचाय्यानाय्यसमूह्यचित्यमग्नौ ।
२६ याज्या दानर्चि ।
२७ तव्यानीयौ ।
२८ य एच्चातः ।
२९ शकितकिचतियतिशसिसहियजिभजिपवर्गात् ।
३० यमिमदिगदोऽनुपसर्गात् ।
३१ चरेराङस्त्वगुरौ ।
३२ वर्योपसर्यावद्यपण्यमुपेयर्तुमतीगर्ह्यविक्रेये ।
३३ स्वामिवैश्ययेऽर्यः ।
३४ वह्यं करणे ।
३५ नाम्नो वदः क्यप्च ।
३६ हत्याभूयं भावे ।
३७ अग्निचित्या ।
३८ खेयमृषोद्ये ।
३९ कुप्यभिद्योध्यसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि ।
४० दृवृग्स्तुजुषेतिशासः ।
४१ ऋदुपान्त्यादक्लृपिचृदृचः ।
४२ कृवृषिमृजिशंसिगुहि-

दुहिजपो वा ।
४३ जिविपून्यो हलिमुञ्जकल्के ।
४४ पदास्वैरिबाह्यापक्ष्ये ग्रहः ।
४५ भृगोऽसंज्ञायाम् ।
४६ समो वा ।
४७ ते कृत्याः ।
४८ णकतृचौ ।
४९ अच् ।
५० लिहादिभ्यः ।
५१ ब्रुवः ।
५२ नन्द्यादिभ्योऽनः ।
५३ ग्रहादिभ्यो णिन् ।
५४ नास्युपान्त्यप्रीकृगृज्ञः कः ।
५५ गेहे ग्रहः ।
५६ उपसर्गादातो डोऽश्यः ।
५७ व्याघ्राघ्रे प्राणिनसोः ।
५८ घ्राध्मापाट्धेदृशः शः ।
५९ साहिसातिवेद्युदेजिधारिपारिचेतेरनुपसर्गात् ।
६० लिम्पविन्दः ।
६१ निगवादेर्नाम्नि ।
६२ वा ज्वलादिदुनीभूग्रहास्रोर्णः ।
६३ अवहृसासंस्रोः ।
६४ तन्व्यधीण्श्वसातः ।
६५ नृत्खनृञ्जः शिल्पिन्यऽकट् ।
६६ गस्थकः ।
६७ टनण् ।
६८ हः कालव्रीह्योः ।

६९ प्रुसृल्वोऽकः साधौ ।
७० आशिष्यऽकन् ।
७१ तिक्कृतौ नाम्नि ।
७२ कर्मणोऽण् ।
७३ शीलिकामिभक्ष्याचरी-
क्षिक्षमो णः ।
७४ गायोऽनुपसर्गाट्टक् ।
७५ सुरासीधोः पिबः ।
७६ आतो डोऽह्वावामः ।
७७ समः ख्यः ।
७८ दश्चाङः ।
७९ प्राद् ज्ञश्च ।
८० आशिषि हनः ।
८१ क्लेशादिभ्योऽपात् ।
८२ कुमारशीर्षाण्णिन् ।
८३ अचित्ते टक् ।
८४ जायापतेश्चिह्नवति ।
८५ ब्रह्मादिभ्यः ।
८६ हस्तिबाहुकपाटाच्छक्तौ
८७ नगरादगजे ।
८८ राजघः ।
८९ पाणिघताडघौ शिल्पिनि ।
९० कुक्ष्यात्मोदरात् भृगः
खिः ।
९१ अर्होऽच् ।
९२ धनुर्दण्डत्सरुलाङ्गला-
ङ्कुशर्ष्टियष्टिशक्ति-
तोमरघटाद्ग्रहः ।
९३ सूत्राद्धारणे ।
९४ आयुधादिभ्यो धृगोऽ-
दण्डादेः ।
९५ हृगो वयोऽनुद्यमे ।

९६ आङः शीले ।

९७ दृतिनाथात् पशाविः।

९८ रजःफलेमलाद् ग्रहः।

९९ देववातादापः ।

१०० सक्तुस्तम्बाद्वत्सव्रीहौ कृगः ।

१०१ किंयत्तद्बहोरः ।

१०२ सङ्ख्याऽहर्दिवाविभानिशाप्रभाभाश्चित्रकर्त्राद्यन्तानन्तकारबाह्वरुर्धनुर्नान्दीलिपिलिविबालिभक्तिक्षेत्रजङ्घाक्षपाक्षणदारजनिदोषादिनदिवसाट्टः।

१०३ हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात्।

१०४ भृतौ कर्मणः ।

१०५ क्षेमप्रियमद्रभद्रात् खाऽण् ।

१०६ मेघर्त्तिभयाभयात्खः।

१०७ प्रियवशाद्वदः ।

१०८ द्विषन्तपपरन्तपौ ।

१०९ परिमाणार्थमितनखात्पचः ।

११० कूलाभ्रकरीषात्कषः।

१११ सर्वात्सहश्च ।

११२ भृवृजितृतपदमेश्च नाम्नि ।

११३ धारेर्धर्च्च ।

११४ पुरन्दरभगन्दरौ ।

११५ वाचंयमो व्रते ।

११६ मन्याण्णिन् ।

११७ कर्तुः खश् ।

११८ एजेः ।

११९ शुनीस्तनमुञ्जकूला-
स्यपुष्पात् ट्धेः ।

१२० नाडीघटीखरीमुष्टिना-
सिकावाताद् ध्मश्च ।

१२१ पाणिकरात् ।

१२२ कूलादुद्रुजोद्वहः ।

१२३ वहाभ्राल्लिहः ।

१२४ बहुविध्वरुस्तिलात्तुदः ।

१२५ ललाटवातशर्द्धात्तपा-
ऽजहाकः ।

१२६ असूर्योग्राद् दृशः ।

१२७ इरम्मदः ।

१२८ नग्नपलितप्रियान्ध-
स्थूलसुभगाढ्यतदन्ता-
च्च्व्यर्थेऽच्वेर्भुवः खिष्णु-
खुकञौ ।

१२९ कृगः खनट् करणे ।

१३० भावे चाशिताद्
भुवः खः ।

१३१ नाम्नो गमः खड्डौ च
विहायसस्तु विहः ।

१३२ सुगदुर्गमाधारे ।

१३३ निर्गो देशे ।

१३४ शमो नाम्न्यः ।

१३५ पार्श्वादिभ्यः शीङः ।

१३६ ऊर्द्ध्वादिभ्यः कर्तुः ।

१३७ आधारात् ।

१३८ चरेष्टः ।

१३९ भिक्षासेनादायात् ।

१४० पुरोऽग्रतोऽग्रे सर्त्तेः ।
१४१ पूर्वात् कर्तुः ।
१४२ स्थापास्नात्रः कः ।
१४३ शोकापनुदतुन्दपरि-
मृजस्तम्बेरमकर्णेजपं-
प्रियालसहास्तिसूचके ।
१४४ मूलविभुजादयः ।
१४५ दुहेर्डुघः ।
१४६ भजो विण् ।
१४७ मन्वन्क्वनिप्विच्
क्वचित् ।
१४८ क्विप् ।
१४९ स्पृशोऽनुदकात् ।
१५० अदोऽनन्नात् ।
१५१ क्रव्यात्क्रव्यादावाम-
पक्वादौ ।
१५२ त्यदाद्यन्यसमानादु-
पमानाद्व्याप्ये दृशष्ट-
क्सकौ च ।
१५३ कर्तुर्णिन् ।
१५४ अजातेः शीले ।
१५५ साधौ ।
१५६ ब्रह्मणो वदः ।
१५७ व्रताभीक्ष्ण्ये ।
१५८ करणाद्यजो भूते ।
१५९ निन्द्ये व्याप्यादिन्वि-
क्रियः ।
१६० हनो णिन् ।
१६१ ब्रह्मभ्रूणवृत्रात् क्वि-
प् ।
१६२ कृगः सुपुण्यपापकर्म-
मन्त्रपदात् ।

१६३ सोमात्सुगः।

१६४ अग्नेश्चेः।

१६५ कर्मण्यग्न्यर्थे।

१६६ दृशः क्वनिप्।

१६७ सहराजभ्यां कृग्युधेः।

१६८ अनोर्जनेर्डः।

१६९ सप्तम्याः।

१७० अजातेः पञ्चम्याः।

१७१ क्वचित्।

१७२ सुयजोर्ङ्वनिप्।

१७३ जॄषोऽतृः।

१७४ क्तक्तवतू।

## द्वितीयः पादः।

१ श्रुसदवस्भ्यः परोक्षा वा।

२ तत्र क्वसुकानौ तद्वत्।

३ वेयिवदनाश्वदनूचानम्।

४ अद्यतनी।

५ विशेषाऽविवक्षाव्यामिश्रे।

६ रात्रौ वसोऽन्त्ययामास्वप्तर्यद्य।

७ अनद्यतने ह्यस्तनी।

८ ख्याते दृश्ये।

९ अयदि स्मृत्यर्थे भविष्यन्ती।

१० वा काङ्क्षायाम्।

११ कृतास्मरणाऽतिनिन्हवे परोक्षा।

१२ परोक्षे।

१३ हशश्वद्युगान्तःप्रच्छ्ये ह्यस्तनी च।

१४ अविवक्षिते।
१५ वाऽद्यतनी पुरादौ।
१६ स्मे च वर्त्तमाना।
१७ ननौ पृष्टोक्तौ सद्वत्।
१८ नन्वोर्वा।
१९ सति।
२० शत्रानशावेष्यति तु सस्यौ।
२१ तौ माङ्याक्रोशेषु।
२२ वा वेत्तेः क्वसुः।
२३ पूङ्यजः शानः।
२४ वयः शक्तिशीले।
२५ धारीङोऽकृच्छ्रेऽतृश्।
२६ सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये।
२७ तृन्शीलधर्मसाधुषु।
२८ भ्राज्यऽलङ्कृग्निराकृग्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रप इष्णुः।
२९ उदः पचिपतिपदिमदेः।
३० भूजेः ष्णुक्।
३१ स्थाग्लाम्लापचिपरिमृजिक्षेः स्नुः।
३२ त्रसिगृधिधृषिक्षिपः क्नुः।
३३ सन्भिक्षासंशेरुः।
३४ विन्द्विच्छू।
३५ शॄवन्देरारुः।
३६ दाधेसिशदसदोरुः।
३७ शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहेरालुः।
३८ डौ सासहिवावहिचाचलिपापतिः।

३९ स्रसिचक्रिदधिजज्ञिनेमिः ।

४० शॄकमगमहनवृषभूस्थ उकण् ।

४१ लषपतपदः ।

४२ भूषाक्रोधार्थजुसृगृधिज्वलशुचश्चानः ।

४३ चालशब्दार्थादकर्मकात् ।

४४ इङितो व्यञ्जनाद्यन्तात् ।

४५ न णिङ्यसूददीपदीक्षः ।

४६ द्रमक्रमो यङः ।

४७ यजिजपिदंशिवदादूकः ।

४८ जागुः ।

४९ शमष्टकात् घिनण् ।

५० युजभुजभजत्यजरञ्जद्विषदुषद्रुहदुहाभ्याहनः ।

५१ आङः क्रीडमुषः ।

५२ प्राच्च यमयसः ।

५३ मथलपः ।

५४ वेश्च द्रोः ।

५५ विपरिप्रात्सर्त्तेः ।

५६ समः पृचैपृज्वरेः ।

५७ संवेः सृजः ।

५८ संपरिव्यनुप्राद्वदः ।

५९ वेर्विचकत्थस्रम्भकषकसलसहनः ।

६० व्यपाभेर्लषः ।

६१ सम्प्राद्वसात् ।

६२ समत्यपाभिव्यभेश्चरः ।

६३ समनुव्यवाद्रुधः ।

६४ वेर्दहः ।

६५ परेर्देविमुहश्च ।
६६ क्षिपरटः ।
६७ वादेश्च णकः ।
६८ निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात् ।
६९ उपसर्गाद्देवृदेविक्रुशः ।
७० वृङ्भिक्षिलुण्टिजल्पिकुट्टाट्टाकः ।
७१ प्रात्सूजोरिन् ।
७२ जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथः ।
७३ सृघस्यदो मरक् ।
७४ भञ्जिभासिमिदो घुरः ।
७५ वेत्तिच्छिदभिदः कित् ।
७६ भियोरुरुकलुकम् ।
७७ सृजीण्नशष्ट्वरप् ।
७८ गत्वरः ।
७९ स्म्यजसहिंसदीपकम्पकमनमो रः ।
८० तृषिधृषिस्वपो नजिङ् ।
८१ स्थेशभासपिसकसो वरः ।
८२ यायावरः ।
८३ दिद्युद्दद्दज्जगज्जुहूवाक्प्राट्धीश्रीद्रूस्रूज्वायतस्तूकटप्रूपरिव्राट्भ्राजादयः क्विप् ।
८४ शंसंस्वयंविप्राद् भुवो डुः ।
८५ पुव इत्रो दैवते ।
८६ ऋषिनाम्नोः करणे ।
८७ लूधूसूखनिचरसहार्त्तेः ।

८८ नीदाम्बूशसूयुयुजस्तुतुदसिसिचमिहपतपानहस्त्रट् ।

८९ हलक्रोडास्ये पुवः ।

९० दंशेस्त्रः ।

९१ धात्री ।

९२ ज्ञानेच्छार्चार्थञीच्छील्यादिभ्यः क्तः ।

९३ उणादयः ।

---

## तृतीयः पादः ।

१ वर्त्स्यति गम्यादिः ।

२ वा हेतुसिद्धौ क्तः ।

३ कषोऽनिटः ।

४ भविष्यन्ती ।

५ अनद्यतने श्वस्तनी ।

६ परिदेवने ।

७ पुरायावतोर्वर्त्तमाना ।

८ कदाकर्ह्योर्नवा ।

९ किंवृत्ते लिप्सायाम् ।

१० लिप्स्यसिद्धौ ।

११ पञ्चम्यर्थहेतौ ।

१२ सप्तमी चोर्द्ध्वमौहूर्त्तिके ।

१३ क्रियायां क्रियार्थायां तुम्णकच्भविष्यन्ती ।

१४ कर्मणोऽण् ।

१५ भाववचनाः ।

१६ पदरुजविशस्पृशो घञ् ।

१७ सर्त्तेः स्थिरव्याधिबलमत्स्ये ।

१८ भावाऽकर्त्रोः ।

१९ इङोऽपादाने तु टिद्वा ।

२० श्रो वायुवर्णनिवृत्ते ।
२१ निरभेः पूल्वः ।
२२ रोरुपसर्गात् ।
२३ भूश्र्यदोऽल् ।
२४ न्यादो नवा ।
२५ संनिव्युपाद्यमः।
२६ नेर्नदगदपठस्वनक्वणः।
२७ वैणे क्वणः ।
२८ युवर्णवृदृवशरणगमृद्ग्रहः
२९ वर्षादयः क्लीबे ।
३० समुदोऽजः पशौ ।
३१ सृग्लहः प्रजनाक्षे ।
३२ पणेर्माने ।
३३ संमदप्रमदौ हर्षे ।
३४ हनोऽन्तर्घनान्तर्घणौ देशे ।
३५ प्रघणप्रघाणौ गृहांशे ।
३६ निघोद्घसङ्घोद्घनाऽपघनोपघ्नं निमितप्रशस्तगणात्याधानाङ्गासन्नम् ।
३७ मूर्त्तिनिचिताऽभ्रे घनः।
३८ व्ययोद्द्रोः करणे ।
३९ स्तम्बाद् घ्नश्च ।
४० परेर्घः ।
४१ ह्वः समाह्वयाह्वयौ द्यूतनाम्नोः ।
४२ न्यभ्युपवेर्वाश्चोत् ।
४३ आङो युद्धे ।
४४ आहावो निपानम् ।
४५ भावेऽनुपसर्गात् ।
४६ हनो वा वध् च ।
४७ व्यधजपमद्भ्यः ।

४८ नवा क्वणयमहसस्वनः।
४९ आङो रुप्लोः।
५० वर्षविघ्नेऽवाद् ग्रहः।
५१ प्राद्रश्मितुलासूत्रे।
५२ वृणो वस्त्रे।
५३ उदः श्रेः।
५४ युपुद्रोर्घञ्।
५५ ग्रहः।
५६ न्यवाच्छापे।
५७ प्राल्लिप्सायाम्।
५८ समो मुष्टौ।
५९ युदुद्रोः।
६० नियश्चानुपसर्गाद्वा।
६१ वोदः।
६२ अवात्।
६३ परेर्द्यूते।
६४ भुवोऽवज्ञाने वा।
६५ यज्ञे ग्रहः।
६६ संस्तोः।
६७ प्रात् स्नुद्रुस्तोः।
६८ अयज्ञे स्त्रः।
६९ वेरशब्दे प्रथने।
७० छन्दो नाम्नि।
७१ क्षुश्रोः।
७२ न्युदो ग्रः।
७३ किरो धान्ये।
७४ नेर्वुः।
७५ इणोऽश्रेषे।
७६ परेः क्रमे।
७७ व्युपाच्छीङः।
७८ हस्तप्राप्ये चेरस्तेये।
७९ चितिदेहावासोपसमा-

धाने कश्चादेः ।
८० सङ्घेऽनूर्द्ध्वे ।
८१ माने ।
८२ स्थादिभ्यः कः ।
८३ ट्वितोऽथुः ।
८४ ड्वितस्त्रिमक्तत्कृतम् ।
८५ यजिस्वपिरक्षियतिप्रच्छो नः ।
८६ विच्छो नङ् ।
८७ उपसर्गाद्दः किः ।
८८ व्याप्यादाधारे ।
८९ अन्तर्द्धिः ।
९० अभिव्याप्तौ भावेऽनञिन् ।
९१ स्त्रियां क्तिः ।
९२ श्वादिभ्यः ।
९३ समिणासुगः ।
९४ सातिहेतियूतिजूतिज्ञप्तिकीर्त्तिः ।
९५ गापापचो भावे ।
९६ स्थो वा ।
९७ आस्यटिव्रज्यजः क्यप् ।
९८ भृगो नाम्नि ।
९९ समजनिषन्निषद्शीङ्सुग्विदिचरिमनीणः ।
१०० कृगः श च वा ।
१०१ मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धाऽन्तर्द्धा ।
१०२ परेः सृचरेर्यः ।
१०३ वाऽटाट्यात् ।
१०४ जागुरश्च ।
१०५ शंसिप्रत्ययात् ।
१०६ क्तेटोगुरोर्व्यञ्जनात् ।

१०७ षितोऽङ् ।

१०८ भिदादयः ।

१०९ भीषिभूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः ।

११० उपसर्गादातः ।

१११ णिवेत्त्यासश्रन्थघट्टवन्देरनः ।

११२ इषोऽनिच्छायाम् ।

११३ पर्यधेर्वा ।

११४ कुत्संपदादिभ्यः क्विप् ।

११५ भ्यादिभ्यो वा ।

११६ व्यतिहारे ऽनीहादिभ्यो ञः ।

११७ नञोऽनिः शापे ।

११८ ग्लाहाज्यः ।

११९ प्रश्नाख्याने वेञ् ।

१२० पर्यायार्हर्णोत्पत्तौ च णकः ।

१२१ नाम्नि पुंसि च ।

१२२ भावे ।

१२३ क्लीबे क्तः ।

१२४ अनट् ।

१२५ यत्कर्मस्पर्शात्कर्त्रङ्गसुखं ततः ।

१२६ रम्यादिभ्यः कर्त्तरि ।

१२७ कारणम् ।

१२८ भुजिपत्यादिभ्यः कर्मापादाने ।

१२९ करणाधारे ।

१३० पुन्नाम्नि घः ।

१३१ गोचरसंचरवहव्रजव्य-

जखलापणनिगमबक-
भगकषाकषनिकषम्।

१३२ व्यञ्जनाद् घञ् ।

१३३ अवात्तृस्तृभ्याम् ।

१३४ न्यायावायाध्यायोद्या-
वसंहारावहाराधार-
दारजारम् ।

१३५ उदङ्को ऽतोये ।

१३६ आनायो जालम् ।

१३७ खनो डडरेकेकवक-
घञ्च ।

१३८ इकिश्तिव् स्वरूपार्थे ।

१३९ दुःस्वीषतः कृच्छ्राकृ-
च्छ्रार्थात्खल् ।

१४० च्व्यर्थे कर्त्राप्याद्
भूकृगः ।

१४१ शासूयुधिदृशिधृषिमृ-
षातोऽनः ।

---

चतुर्थः पादः ।

१ सत्सामीप्ये सद्वद्वा ।

२ भूतवच्चाशंस्ये वा ।

३ क्षिप्राशंसार्थयोर्भविष्य-
न्तीसप्तम्यौ ।

४ सम्भावने सिद्धवत् ।

५ नानद्यतनः प्रबन्धास-
त्त्योः ।

६ एष्यत्यवधौ देशस्यार्वा-
ग्भागे ।

७ कालस्यानहोरात्राणाम् ।

८ परे वा ।

९ सप्तम्यर्थे क्रियातिपत्तौ

क्रियातिपत्तिः।
१० भूते।
११ वोतात्प्राक्।
१२ क्षेपेऽपिजात्वोर्वर्त्तमाना।
१३ कथमि सप्तमी च वा।
१४ किंवृत्ते सप्तमीभविष्यन्त्यौ।
१५ अश्रद्धामर्षेऽन्यत्रापि।
१६ किंकिलास्त्यर्थयोर्भविष्यन्ती।
१७ जातुयद्यदायदौ सप्तमी।
१८ क्षेपे च यच्चयत्रे।
१९ चित्रे।
२० शेषे भविष्यन्त्ययदौ।
२१ सप्तम्युताप्योर्बाढे।
२२ सम्भावनेऽलमर्थे तदर्थानुक्तौ।
२३ अयदि श्रद्धाधातौ नवा।
२४ सतीच्छार्थात्।
२५ वर्त्स्यति हेतुफले।
२६ कामोक्तावकच्चिति।
२७ इच्छार्थे सप्तमीपञ्चम्यौ।
२८ विधिनिमन्त्रणामन्त्रणाऽधीष्टसम्प्रश्नप्रार्थने।
२९ प्रैषाऽनुज्ञावसरे कृत्यपञ्चम्यौ।
३० सप्तमी चोर्द्ध्वमौहूर्त्तिके।
३१ स्मे पञ्चमी।
३२ अधीष्टौ।
३३ कालवेलासमये तुम्वाऽवसरे।
३४ सप्तमी यदि।

३५ शक्तार्हे कृत्याश्च ।
३६ णिन्चाऽवश्यकाधमर्ण्ये ।
३७ अर्हे तृच् ।
३८ आशिष्याशीःपञ्चम्यौ ।
३९ माङ्यद्यतनी ।
४० सस्मे ह्यस्तनी च ।
४१ धातोः सम्बन्धे प्रत्ययाः ।
४२ भृशाभीक्ष्ण्ये हिस्वौ यथाविधि तध्वमौ च तद्युष्मदि ।
४३ प्रचये नवा सामान्यार्थस्य ।
४४ निषेधेऽलंखल्वोः क्त्वा ।
४५ परावरे ।
४६ निमील्यादिमेङस्तुल्यकर्तृके ।
४७ प्राक्काले ।
४८ खणम्, चाभीक्ष्ण्ये ।
४९ पूर्वाग्रेप्रथमे ।
५० अन्यथैवंकथमित्थमः कृगोऽनर्थकात् ।
५१ यथातथादीर्ष्योत्तरे ।
५२ शापे व्याप्यात् ।
५३ स्वाद्वर्थाददीर्घात् ।
५४ विदृग्भ्यः कार्त्स्न्ये णम् ।
५५ यावतो विन्दजीवः ।
५६ चर्मोदरात्पूरेः ।
५७ वृष्टिमाने ऊलुक्चास्य वा ।
५८ चेलार्थात् क्नोपेः ।
५९ गात्रपुरुषात्स्नः ।
६० शुष्कचूर्णरूक्षात्पिषस्त-

स्यैव ।
६१ कृग्ग्रहोऽकृतजीवात् ।
६२ निमूलात्कषः ।
६३ हनश्च समूलात् ।
६४ करणेभ्यः ।
६५ स्वस्नेहनार्थात्पुषपिषः ।
६६ हस्तार्थाद्ग्रहवर्त्तिवृतः ।
६७ बन्धेर्नाम्नि ।
६८ आधारात् ।
६९ कर्तुर्ज्जीवपुरुषान्नश्वहः ।
७० ऊर्द्ध्वात्पूः शुषः ।
७१ व्याप्याच्चेवात् ।
७२ उपात्किरो लवने ।
७३ दंशेस्तृतीयया ।
७४ हिंसार्थादेकाप्यात ।
७५ उपपीडरुधकर्षस्ततसप्तम्या ।
७६ प्रमाणसमासत्त्योः ।
७७ पञ्चम्या त्वरायाम् ।
७८ द्वितीयया ।
७९ स्वाङ्गेनाऽध्रुवेण ।
८० परिक्लेश्येन ।
८१ विशापतपदस्कन्दो वीप्साभीक्ष्ण्ये ।
८२ कालेन तृष्यस्वः क्रियान्तरे ।
८३ नाम्ना ग्रहादिशः ।
८४ कृगोऽव्ययेनाऽनिष्टोक्तौ क्त्वाणमौ ।
८५ तिर्यचाऽपवर्गे ।
८६ स्वाङ्गतश्च्व्यर्थनानाविनाधार्थेन भुवश्च ।
८७ तूष्णीमा ।

८८ आनुलोम्येऽन्वचा ।

८९ इच्छार्थे कर्मणः सप्तमी ।

९० शकधृषज्ञारभलभसहार्हग्लाघटास्तिसमर्थार्थे च तुम् ।

---

## षष्ठोऽध्यायः ।

### प्रथमः पादः ।

१ तद्धितोऽणादिः ।

२ पौत्रादि वृद्धम् ।

३ वंश्यज्यायोभ्रात्रोर्जीवतिप्रपौत्राद्यस्त्री युवा ।

४ सपिण्डे वयःस्थानाधिके जीवद्वा ।

५ युववृद्धं कुत्सार्चे वा ।

६ संज्ञादुर्वा ।

७ त्यदादिः ।

८ वृद्धिर्यस्य स्वरेष्वादिः ।

९ एदोद्देश एवेयादौ ।

१० प्राग्देशे ।

११ वाऽऽद्यात् ।

१२ गोत्रोत्तरपदाद्गोत्रादिवाऽजिह्वाकात्यहरितकात्यात् ।

१३ प्राग्जितादण् ।

१४ धनादेः पत्युः ।

१५ अनिदम्यणपवादे च दित्यदित्यादित्ययमपत्युत्तरपदाञ्ञ्यः ।

१६ बर्हिषष्टीकण्च ।
१७ कल्यग्नेरेयण् ।
१८ पृथिव्याञाञ् ।
१९ उत्सादेरञ् ।
२० बष्कयादसमासे ।
२१ देवाद्यञ् च ।
२२ अः स्थाम्नः ।
२३ लोम्नोऽपत्येषु ।
२४ द्विगोरनपत्ये यस्वरादे-
र्लुबद्विः ।
२५ प्राग्वतः स्त्रीपुंसान्नञ्
स्नञ् ।
२६ त्वे वा ।
२७ गोः स्वरे यः ।
२८ ङसोऽपत्ये ।
२९ आद्यात् ।
३० वृद्धाद्यूनि ।
३१ अत इञ् ।
३२ बाह्वादिभ्यो गोत्रे ।
३३ वर्मणोऽचक्रात् ।
३४ अजादिभ्यो धेनोः ।
३५ ब्राह्मणाद्वा ।
३६ भूयः सम्भूयोऽम्भोऽमि-
तौजसः स्लुक्च ।
३७ शालङ्क्यौदिषाडिवा-
ड्वलि ।
३८ व्यासवरुटसुधातृनिषा-
दबिम्बचण्डालादन्तस्य
चाक् ।
३९ पुनर्भूपुत्रदुहितृननान्दु-
रनन्तरेऽञ् ।
४० परस्त्रियाः परशुश्चाऽसा-

वर्ण्ये ।

४१ विदादेर्वृद्धे ।

४२ गर्गादेर्यञ् ।

४३ मधुबभ्रोर्ब्राह्मणकौशिके ।

४४ कपिबोधादाङ्गिरसे ।

४५ वतण्डात् ।

४६ स्त्रियां लुप् ।

४७ कुञ्जादेर्ञायन्यः ।

४८ स्त्रिबहुष्वायनञ् ।

४९ अश्वादेः ।

५० शपभरद्वाजादात्रेये ।

५१ भर्गात्त्रैगर्त्ते ।

५२ आत्रेयाद्भारद्वाजे ।

५३ नडादिभ्य आयनण् ।

५४ यञिञः ।

५५ हरितादेरञः ।

५६ क्रोष्टृशलङ्कोर्लुक्च ।

५७ दर्भकृष्णाग्निशर्मरणशरद्वच्छुनकादाग्रायणब्राह्मणवार्षगण्यवाशिष्ठभार्गववात्स्ये ।

५८ जीवन्तपर्वताद्वा ।

५९ द्रोणाद्वा ।

६० शिवादेरण् ।

६१ ऋषिवृष्ण्यन्धककुरुभ्यः ।

६२ कन्यात्रिवेण्याः कनीनत्रिवणं च ।

६३ शुङ्गाभ्यां भारद्वाजे ।

६४ विकर्णच्छगलाद्वात्स्यात्रेये ।

६५ णश्च विश्रवसो विश्लुक्च वा ।

६६ सङ्ख्यासंभद्रान्मातु-
र्मातुर्च्च ।
६७ अदोर्नदीमानुषीनाम्नः।
६८ पीलासाल्वामण्डूकाद्वा।
६९ दितेश्चैयण् वा ।
७० ङ्याप्त्यूङः ।
७१ द्विस्वरादनद्याः ।
७२ इतोऽनिञः ।
७३ शुभ्रादिभ्यः ।
७४ श्यामलक्षणाद्वाशिष्ठे।
७५ विकर्णकुषीतकात्काश्यपे।
७६ भ्रुवो भ्रुव् च ।
७७ कल्याणादेरिन् चान्तस्य।
७८ कुलटाया वा ।
७९ चटकाण्णैरः स्त्रियां तु
लुप् ।

८० क्षुद्राभ्य एरण् वा ।
८१ गोधाया दुष्टे णारश्च।
८२ जण्टपण्टात् ।
८३ चतुष्पाद्भ्य एयञ् ।
८४ गृष्ट्यादेः ।
८५ वाडवेयो वृषे ।
८६ रेवत्यादेरिकण् ।
८७ वृद्धस्त्रियाः क्षेपे णश्च।
८८ भ्रातुर्व्यः ।
८९ ईयः स्वसुश्च ।
९० मातृपित्रादेर्डेयणीयणौ।
९१ श्वशुराद्यः ।
९२ जातौ राज्ञः ।
९३ क्षत्रादियः ।
९४ मनोर्याणौ षश्चान्तः ।
९५ माणवः कुत्सायाम् ।

९६ कुलादीनः।
९७ यैयकञावसमासे वा।
९८ दुष्कुलादेयण्वा।
९९ महाकुलाद्वाऽञीनञौ।
१०० कुर्वादेर्ञ्यः।
१०१ सम्राजः क्षत्रिये।
१०२ सेनान्तकारुलक्ष्मणा-दिञ्च।
१०३ सुयाम्नः सौवीरेष्वा-यनिञ्।
१०४ पाण्टाहृतिमिमताण्ण-ञ्च।
१०५ भागवित्तितार्णविन्द-वाऽकशापेयान्निन्दा-यामिकण्वा।
१०६ सौयामायानियामुन्दा-यनिबार्ष्यायणेरीयश्च वा।
१०७ तिकादेरायनिञ्।
१०८ दगुकोशलकर्मारच्छा-गवृषाद्यादिः।
१०९ द्विस्वरादणः।
११० अवृद्धाद्दोर्नवा।
१११ पुत्रान्तात्।
११२ चर्मिवर्मिगारेटकार्क-ट्यकाकलङ्कावाकिना-च्च कश्चान्तोऽन्त्यस्व-रात्।
११३ अदोरायनिः प्रायः।
११४ राष्ट्रक्षत्रियात्सरूपाद्रा-जापत्ये द्रिरञ्।
११५ गान्धारिसाल्वेया-

भ्याम् ।
११६ पुरुमगधकलिङ्गसूरमसद्विस्वरादण् ।
११७ साल्वांशप्रत्यग्रथकलकूटाऽश्मकादिञ् ।
११८ दुनादिकुर्वित्कोशलाजादाञ्यः ।
११९ पाण्डोर्डयण् ।
१२० शकादिभ्यो द्रेर्लुप् ।
१२१ कुन्त्यवन्तेः स्त्रियाम् ।
१२२ कुरोर्वा ।
१२३ द्रेरञणोऽप्राच्यभर्गादेः ।
१२४ बहुष्वऽस्त्रियाम् ।
१२५ यस्कादेर्गोत्रे ।
१२६ यञञोऽश्यापर्णान्तगोपवनादेः ।
१२७ कौण्डिन्यागस्त्ययोः कुण्डिनागस्ती च ।
१२८ भृग्वङ्गिरस्कुत्सवाशिष्ठगोतमाऽत्रेः ।
१२९ प्राग्भरते बहुस्वरादिञः
१३० वोपकादेः ।
१३१ तिककितवादौ द्वन्द्वे ।
१३२ द्व्यादेस्तथा ।
१३३ वाऽन्येन ।
१३४ द्व्येकेषु षष्ठ्यास्तत्पुरुषे यञादेर्वा ।
१३५ न प्राग्जितीये स्वरे ।
१३६ गर्गभार्गविका ।
१३७ यूनि लुप् ।
१३८ वायनणायनिञोः ।

१३९ द्रीञो वा ।

१४० ञिदार्षादणिञोः ।

१४१ अब्राह्मणात् ।

१४२ पैलादेः ।

१४३ प्राच्येऽञोऽतौल्वल्यादेः

---

द्वितीयः पादः ।

१ रागाट्टो रक्ते ।

२ लाक्षारोचनादिकण् ।

३ शकलकर्दमाद्वा ।

४ नीलपीतादकम् ।

५ उदितगुरोर्भाद्युक्तेऽब्दे ।

६ चन्द्रयुक्तात्काले लुप्त्वऽप्रयुक्ते ।

७ द्वन्द्वादीयः ।

८ श्रवणाऽश्वत्थान्नाम्न्यः ।

९ षष्ठ्याः समूहे ।

१० भिक्षादेः ।

११ क्षुद्रकमालवात्सेनानाम्नि ।

१२ गोत्रोक्षवत्सोष्ट्रवृद्धाऽजोरभ्रमनुष्यराजराजन्यराजपुत्रादकञ् ।

१३ केदाराण्ण्यश्च ।

१४ कवचिहस्त्यऽचित्ताच्चेकण् ।

१५ धेनोरनञः ।

१६ ब्राह्मणमाणववाडवाद्यः ।

१७ गणिकाया ण्यः ।

१८ केशाद्वा ।

१९ वाऽश्वादीयः ।

२० पर्श्वा ड्वण् ।

२१ ईनोऽन्हः क्रतौ ।

२२ पृष्ठाद्यः ।
२३ चरणाद्धर्म्मवत् ।
२४ गोरथवातात्त्रल्कट्यल्लूलम् ।
२५ पाशादेश्च ल्यः ।
२६ श्वादिभ्योऽञ् ।
२७ खलादिभ्यो लिन् ।
२८ ग्रामजनबन्धुगजसहायात्तल् ।
२९ पुरुषात्कृतहितवधविकारे चैयञ् ।
३० विकारे ।
३१ प्राण्यौषधिवृक्षेभ्योऽवयवे च ।
३२ तालाद्धनुषि ।
३३ त्रपुजतोः षोन्तश्च ।
३४ शम्या ल्ः ।
३५ पयोद्रोर्यः ।
३६ उष्ट्रादकञ् ।
३७ उमोर्णाद्वा ।
३८ एण्या एयञ् ।
३९ कौशेयम् ।
४० परशव्याद्यलुक् च ।
४१ कंसीयाञ्ञ्यः ।
४२ हेमार्थान्माने ।
४३ द्रोर्वयः ।
४४ मानात्क्रीतवत् ।
४५ हेमादिभ्योऽञ् ।
४६ अभक्ष्याच्छादने वा मयट् ।
४७ शरदर्भकूदीतृणसोमवल्वजात् ।

४८ एकस्वरात् ।
४९ दोरप्राणिनः ।
५० गोः पुरीषे ।
५१ व्रीहेः पुरोडाशे ।
५२ तिलयवादनाम्नि ।
५३ पिष्टात् ।
५४ नाम्नि कः ।
५५ ह्योगोदोहादीनञ् हियङ्गुश्चास्य ।
५६ अपोयञ्वा ।
५७ लुब्बहुलं पुष्पमूले ।
५८ फले ।
५९ प्लक्षादेरण् ।
६० जम्ब्वा वा ।
६१ नाद्विरद्रुवयगोमयफलात्
६२ पितृमातुर्व्यडुलं भ्रातरि ।
६३ पित्रोर्डामहट् ।
६४ अवेर्दुग्धे सोढदूसमरीसम् ।
६५ राष्ट्रेऽनङ्गादिभ्यः ।
६६ राजन्यादिभ्योऽकञ् ।
६७ वसातेर्वा ।
६८ भौरिक्यैषु कार्यादेर्विधभक्तम् ।
६९ निवासाऽदूरभवे इति देशे नाम्नि ।
७० तदत्राऽस्ति ।
७१ तेन निर्वृत्ते च ।
७२ नद्यां मतुः ।
७३ मध्वादेः ।
७४ नडकुमुदवेतसमाहिषाड्डित् ।

७५ नडशादाड्डलः ।
७६ शिखायाः ।
७७ शिरीषादिककणौ ।
७८ शर्कराया इकणीयाऽण् च ।
७९ रोऽश्मादेः ।
८० प्रेक्षादेरिन् ।
८१ तृणादेः सल् ।
८२ काशादेरिलः ।
८३ अरीहणादेरकण् ।
८४ सुपन्थ्यादेर्ञ्यः ।
८५ सुतङ्गमादेरिञ् ।
८६ बलादेर्यः ।
८७ अहरादिभ्योऽञ् ।
८८ सख्यादेरेयण् ।
८९ पन्थ्यादेरायनण् ।
९० कर्णादेरायनिञ् ।
९१ उत्करादेरीयः ।
९२ नडादेः कीयः ।
९३ कृशाश्वादेरीयण् ।
९४ ऋश्यादेः कः ।
९५ वराहादेः कण् ।
९६ कुमुदादेरिकः ।
९७ अश्वत्थादेरिकण् ।
९८ सास्य पौर्णमासी ।
९९ आग्रहायण्यश्वत्थादिकण् ।
१०० चैत्रीकार्त्तिकीफाल्गुनीश्रवणाद्वा ।
१०१ देवता ।
१०२ पैगाक्षीपुत्रादेरीयः ।
१०३ शुक्रादियः ।

१०४ शतरुद्रात्तौ ।
१०५ अपोनपादपान्नपात-
स्तृचातः ।
१०६ महेन्द्राद्वा ।
१०७ कसोमाट्ट्यण् ।
१०८ द्यावापृथिवीशुनासी-
राऽग्नीषोममरुत्वद्वा-
स्तोष्पतिगृहमेधादी-
ययौ ।
१०९ वाय्वृतुपित्त्रुषसो यः।
११० महाराजप्रोष्ठपदादि-
कण् ।
१११ कालाद्भववत् ।
११२ आदेश्छन्दसः प्रगाथे।
११३ योद्धृप्रयोजनाद्युद्धे।
११४ भावघञोऽस्यां णः ।
११५ श्यैनम्पातातैलम्पाता।
११६ प्रहरणात् क्रीडायां णः।
११७ तद्वेत्त्यधीते ।
११८ न्यायादेरिकण् ।
११९ पदकल्पलक्षणान्तक्र-
त्वाख्यानाख्यायिकात्।
१२० अकल्पात्सूत्रात् ।
१२१ अधर्मक्षत्रत्रिसंसर्गा-
ङ्गाद्विद्यायाः ।
१२२ याज्ञिकौक्थिकलौ-
कायितिकम् ।
१२३ अनुब्राह्मणादिन् ।
१२४ शतषष्ठेः पथ इकट् ।
१२५ पदोत्तरपदेभ्य इकः ।
१२६ पदक्रमशिक्षामीमां-
सासाम्नोऽकः ।

१२७ ससर्वपूर्वाल्लुप् ।
१२८ सङ्ख्याकात्सूत्रे ।
१२९ प्रोक्तात् ।
१३० वेदेन्ब्राह्मणमत्रैव ।
१३१ तेनच्छन्ने रथे ।
१३२ पाण्डुकम्बलादिन् ।
१३३ दृष्टे साम्नि नाम्नि ।
१३४ गोत्रादङ्कवत् ।
१३५ वामदेवाद्यः ।
१३६ डिद्वाऽण् ।
१३७ वा जाते द्विः ।
१३८ तत्रोद्धृतपात्रेभ्यः ।
१३९ स्थण्डिलाच्छेते व्रती ।
१४० संस्कृते भक्ष्ये ।
१४१ शूलोखाद्यः ।
१४२ क्षीरादेयण् ।
१४३ दध्न इकण् ।
१४४ वोदश्वितः ।
१४५ क्वचित् ।

---

तृतीयः पादः ।

१ शेषे ।
२ नद्यादेरेयण् ।
३ राष्ट्रादियः ।
४ दूरादेत्यः ।
५ उत्तरादाहञ् ।
६ पारावारादीनः ।
७ व्यस्तव्यत्यस्तात् ।
८ द्युप्रागपागुदक्प्रतीचो यः ।
९ ग्रामादीनञ्च ।
१० कत्र्यादेश्चैयकञ् ।
११ कुण्ड्यादिभ्यो यलुक्च ।

१२ कुलकुक्षिग्रीवाच्छ्वाऽस्यलङ्कारे ।

१३ दक्षिणापश्चात्पुरसस्त्यण् ।

१४ वल्ह्युर्दिपर्दिकापिश्या-ष्टायनण् ।

१५ रंकोः प्राणिनि वा ।

१६ क्वेहामात्रतसस्त्यच् ।

१७ नेर्ध्रुवे ।

१८ निसो गते ।

१९ ऐषमोह्यःश्वसो वा ।

२० कन्थाया इकण् ।

२१ वर्णावकञ् ।

२२ रूप्योत्तरपदारण्याण् णः ।

२३ दिक्पूर्वादनाम्नः ।

२४ मद्रादञ् ।

२५ उदग्ग्रामाद्यकृल्लोम्नः ।

२६ गोष्ठीतैकीनैकेतीगोमतीशूरसेनवाहीकरोमकपटच्चरात् ।

२७ शकलादेर्यञः ।

२८ वृद्धेऽञः ।

२९ न द्विस्वरात्प्राग्भरतात् ।

३० भवतोरिकणीयसौ ।

३१ परजनराज्ञोऽकीयः ।

३२ दोरीयः ।

३३ उष्णादिभ्यः कालात् ।

३४ व्यादिभ्यो णिकेकणौ ।

३५ काश्यादेः ।

३६ वाहीकेषु ग्रामात् ।

३७ वोशीनरेषु ।

३८ वृजिमद्राद्देशात्कः ।

३९ उवर्णादिकण् ।

४० दोरेव प्राचः ।
४१ इतोऽकञ् ।
४२ रोपान्त्यात् ।
४३ प्रस्थपुरवहान्तयोपान्त्य-धन्वार्थात् ।
४४ राष्ट्रेभ्यः ।
४५ बहुविषयेभ्यः ।
४६ धुमादेः ।
४७ सौवीरेषु कूलात् ।
४८ समुद्रान्नृनावोः ।
४९ नगरात्कुत्सादाक्ष्ये ।
५० कच्छाग्निवक्त्रवर्त्तोत्तर-पदात् ।
५१ अरण्यात्पथि न्याया-ध्यायेभनरविहारे ।
५२ गोमये वा ।
५३ कुरुयुगन्धराद्वा ।
५४ साल्वाद्गोयवाग्वपत्तौ ।
५५ कच्छादेर्नृनृस्थे ।
५६ कोपान्त्याच्चाण् ।
५७ गर्त्तोत्तरपदादीयः ।
५८ कटपूर्वात्प्राचः ।
५९ कखोपान्त्यकन्थापलद-नगरग्रामह्रदोत्तरपदा-द्दोः ।
६० पर्वतात् ।
६१ अनरे वा ।
६२ पर्णकृकणाद्भारद्वाजात् ।
६३ गहादिभ्यः ।
६४ पृथिवीमध्यान्मध्यम-श्चास्य ।
६५ निवासाच्चरणेऽण् ।

६६ वेणुकादिभ्य ईयण् ।
६७ वा युष्मदस्मदोऽञीनञौ युष्माकास्माकं चास्यैकत्वे तु तवकममकम् ।
६८ द्वीपादनुसमुद्रं ण्यः ।
६९ अर्द्धाद्यः ।
७० सपूर्वादिकण् ।
७१ दिक्पूर्वात्तौ ।
७२ ग्रामराष्ट्रांशादणिकणौ।
७३ परावराधमोत्तमादेर्यः।
७४ अमोन्तावोऽधसः ।
७५ पश्चादाद्यन्ताग्रादिमः।
७६ मध्यान्मः ।
७७ मध्येउत्कर्षापकर्षयोरः।
७८ अध्यात्मादिभ्य इकण्।
७९ समानपूर्वलोकोत्तरपदात् ।
८० वर्षाकालेभ्यः ।
८१ शरदः श्राद्धे कर्म्मणि।
८२ नवा रोगातपे ।
८३ निशाप्रदोषात् ।
८४ श्वसस्तादिः ।
८५ चिरपरुत्परारेस्त्नः ।
८६ पुरो नः ।
८७ पूर्वाह्णापराह्णात्तनट् ।
८८ सायञ्चिरंप्राह्णेप्रगेऽव्ययात् ।
८९ भर्तुसन्ध्यादेरण् ।
९० संवत्सरात्फलपर्वणोः ।
९१ हेमन्ताद्वा तलुक्च ।
९२ प्रावृष एण्यः ।

९३ स्थामाजिनान्ताल्लुप् ।
९४ तत्र कृतलब्धक्रीतसम्भूते ।
९५ कुशले ।
९६ पथोऽकः ।
९७ कोऽश्मादेः ।
९८ जाते ।
९९ प्रावृष इकः ।
१०० नाम्नि शरदोऽकञ् ।
१०१ सिन्ध्वपकरात्काणौ ।
१०२ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करादकः ।
१०३ पथः पन्थ च ।
१०४ अश्च वामावास्यायाः ।
१०५ श्रविष्ठाषाढादीयण् च ।
१०६ फल्गुन्याष्टः ।
१०७ बहुलाऽनुराधापुष्यार्थपुनर्वसुहस्तविशाखास्वातेर्लुप् ।
१०८ चित्रारेवतीरोहिण्याः स्त्रियाम् ।
१०९ बहुलमन्येभ्यः ।
११० स्थानान्तगोशालखरशालात् ।
१११ वत्सशालाद्वा ।
११२ सोदर्यसमानोदर्यौ ।
११३ कालाद्देये ऋणे ।
११४ कलाप्यश्वत्थयवबुसोमाव्यासैषमसोऽकः ।
११५ ग्रीष्मावरसमादकञ् ।
११६ संवत्सराग्रहायण्या इकण् च ।

११७ साधुपुष्पत्पच्यमाने ।
११८ उप्ते ।
११९ आश्वयुज्या अकञ् ।
१२० ग्रीष्मवसन्ताद्वा ।
१२१ व्याहरति मृगे ।
१२२ जयिनि च ।
१२३ भवे ।
१२४ दिगादिदेहांशाद्यः ।
१२५ नाम्न्युदकात् ।
१२६ मध्यादिनण्णेयामोऽन्तश्च ।
१२७ जिह्वामूलाङ्गुलेश्चेयः ।
१२८ वर्गान्तात् ।
१२९ ईनयौ चाऽशब्दे ।
१३० दृतिकुक्षिकलशिबस्त्यहेरेयण् ।
१३१ आस्तेयम् ।
१३२ ग्रीवातोऽण् च ।
१३३ चतुर्मासान्नाम्नि ।
१३४ यज्ञे ञ्यः ।
१३५ गम्भीरपञ्चजनबहिर्देवात् ।
१३६ परिमुखादेरव्ययीभावात् ।
१३७ अन्तःपूर्वादिकण् ।
१३८ पर्यनोर्ग्रामात् ।
१३९ उपाज्जानुनीविकर्णात्प्रायेण ।
१४० रूढावन्तःपुरादिकः ।
१४१ कर्णललाटात्कल् ।
१४२ तस्य व्याख्याने च ग्रन्थात् ।

१४३ प्रायोबहुस्वरादिकण् ।
१४४ ऋगृद्द्विस्वरयागेभ्यः ।
१४५ ऋषेरध्याये ।
१४६ पुरोडाशपौरोडाशादिकेकटौ ।
१४७ छन्दसो यः ।
१४८ शिक्षादेश्चाण् ।
१४९ तत आगते ।
१५० विद्यायोनिसम्बन्धादकञ् ।
१५१ पितुर्यो वा ।
१५२ ऋत इकण् ।
१५३ आयस्थानात् ।
१५४ शुण्डिकादेरण् ।
१५५ गोत्रादङ्कवत् ।
१५६ नृहेतुभ्यो रूप्यमयटौ वा ।
१५७ प्रभवति ।
१५८ वैडुर्यः ।
१५९ त्यदादेर्मयट् ।
१६० तस्येदम् ।
१६१ हलसीरादिकण् ।
१६२ समिध आधाने टेन्यण् ।
१६३ विवाहे द्वन्द्वादकल् ।
१६४ अदेवासुरादिभ्यो वैरे ।
१६५ नटान्नृत्ते ञ्यः ।
१६६ छन्दोगौक्थिकयाज्ञिकबह्वृचाच्च धर्माम्नायसङ्घे ।
१६७ आथर्वणिकादणिक-

लुक्च ।

१६८ चरणादकञ् ।

१६९ गोत्राददण्डमाणवशिष्ये ।

१७० रैवतिकादेरीयः ।

१७१ कौपिञ्जलहास्तिपदादण् ।

१७२ सङ्घघोषाङ्कलक्षणेऽञ्यञिञः ।

१७३ शाकलादकञ्च ।

१७४ गृहेऽग्नीधोरण् धश्च ।

१७५ रथात्सादेश्च वोढ्रङ्गे ।

१७६ यः ।

१७७ पत्रपूर्वादञ् ।

१७८ वाहनात् ।

१७९ वाह्यपथ्युपकरणे ।

१८० वहेस्तुरिश्चादिः ।

१८१ तेन प्रोक्ते ।

१८२ मौदादिभ्यः ।

१८३ कठादिभ्यो वेदे लुप् ।

१८४ तित्तिरिवरतन्तुखण्डिकोखादीयण् ।

१८५ छगालिनो णेयिन् ।

१८६ शौनकादिभ्यो णिन् ।

१८७ पुराणे कल्पे ।

१८८ काश्यपकौशिकाद्वेदवच्च ।

१८९ शिलालिपाराशर्यान्नटभिक्षुसूत्रे ।

१९० कृशाश्वकर्मन्दादिन् ।

१९१ उपज्ञाते ।

१९२ कृते ।

१९३ नाम्नि मक्षिकादिभ्यः।
१९४ कुलालादेरकञ् ।
१९५ सर्वचर्म्मण ईनेनञौ।
१९६ उरसोयाणौ।
१९७ छन्दस्यः ।
१९८ अमोऽधिकृत्यग्रन्थे ।
१९९ ज्योतिषम् ।
२०० शिशुक्रन्दादिभ्य ईयः।
२०१ द्वन्द्वात्प्रायः ।
२०२ अभिनिष्क्रामतिद्वारे।
२०३ गच्छति पथिदूते ।
२०४ भजति ।
२०५ महाराजादिकण् ।
२०६ अचित्तादेदेशकालात्।
२०७ वासुदेवार्ज्जुनादकः।
२०८ गोत्रक्षत्रियेभ्योऽकञ् प्रायः ।
२०९ सरूपाद् द्रेः सर्वं राष्ट्रवत् ।
२१० टस्तुल्यदिशि ।
२११ तसिः ।
२१२ यश्चोरसः ।
२१३ सेर्निवासादस्य ।
२१४ आभिजनात् ।
२१५ शण्डिकादेर्ण्यः ।
२१६ सिन्ध्वादेरञ् ।
२१७ सलातुरादीयण् ।
२१८ तूदीवर्मत्या एयण्।
२१९ गिरेरीयोऽस्त्राजीवे।

---

चतुर्थः पादः ।

१ इकण् ।
२ तेन जितजयद्दीव्यत्ख-

नत्सु ।
३ संस्कृते ।
४ कुलत्थकोपान्त्यादण् ।
५ संसृष्टे ।
६ लवणादः ।
७ चूर्णमुद्गाभ्यामिनणौ ।
८ व्यञ्जनेभ्य उपसिक्ते ।
९ तरति ।
१० नौद्विस्वरादिकः ।
११ चरति ।
१२ पर्पादेरिकट् ।
१३ पदिकः ।
१४ श्वगणाद्वा ।
१५ वेतनादेर्जीवति ।
१६ व्यस्ताच्च क्रयविक्रयादिकः ।
१७ वस्नात् ।
१८ आयुधादीयश्च ।
१९ व्रातादीनञ् ।
२० निर्वृत्तेऽक्षद्यूतादेः ।
२१ भावादिमः ।
२२ याचितापमित्यात्कण् ।
२३ हरत्युत्सङ्गादेः ।
२४ भस्त्रादेरिकट् ।
२५ विवधवीवधाद्वा ।
२६ कुटिलिकाया अण् ।
२७ ओजःसहोम्भसो वर्त्तते ।
२८ तं प्रत्यनोर्लोमेपकूलात् ।
२९ परेर्मुखपार्श्वात् ।
३० रक्षदुञ्छतोः ।
३१ पक्षिमत्स्यमृगार्थाद्घ्नति ।

३२ परिपन्थाच्चतिष्ठति च ।
३३ परिपथात् ।
३४ अवृद्धेर्गृह्णति गर्ह्ये ।
३५ कुसीदादिकट् ।
३६ दशैकादश्चादिकश्च ।
३७ अर्थपदपदोत्तरललाम-
प्रतिकण्ठात् ।
३८ परदारादिभ्यो गच्छति ।
३९ प्रतिपथादिकश्च ।
४० माथोत्तरपदपदव्याक्र-
न्दाद्धावति ।
४१ पश्चात्यनुपदात् ।
४२ सुस्नातादिभ्यः पृच्छति ।
४३ प्रभूतादिभ्यो ब्रुवति ।
४४ माशब्द इत्यादिभ्यः ।
४५ शाब्दिकदार्दरिकलाला-
टिककौक्कुटिकम् ।
४६ समूहार्थात्समवेते ।
४७ पर्षदो ण्यः ।
४८ सेनाया वा ।
४९ धर्माधर्माच्चरति ।
५० षष्ठ्या धर्म्ये ।
५१ ऋन्नरादेरण् ।
५२ विभाजयितृविशसितु-
र्णीड्लुक् च ।
५३ अवक्रये ।
५४ तदस्य पण्यम् ।
५५ किशरादेरिकट् ।
५६ शलालुनो वा ।
५७ शिल्पम् ।
५८ मड्डुकझर्झराद्वाऽण ॥
५९ शीलम् ।

६० अङ्गस्थाच्छत्रादेरञ् ।
६१ तूष्णीकः ।
६२ प्रहरणम् ।
६३ परश्वधाद्वाऽण् ।
६४ शक्तियष्टेष्टीकण् ।
६५ वेष्टयादिभ्यः ।
६६ नास्तिकास्तिकदैष्टिकम् ।
६७ वृत्तोऽपपाठोऽनुयोगे ।
६८ बहुस्वरपूर्वादिकः ।
६९ भक्ष्यं हितमस्मै ।
७० नियुक्तं दीयते ।
७१ श्राणामांसौदनादिको वा ।
७२ भक्तौदनाद्वा णिकट् ।
७३ नवयज्ञादयोऽस्मिन् वर्त्तन्ते ।
७४ तत्र नियुक्ते ।
७५ अगारान्तादिकः ।
७६ अदेशकालादध्यायिनि ।
७७ निकटादिषु वसति ।
७८ सतीर्थ्यः ।
७९ प्रस्तारसंस्थानतदन्तकठिनान्तेभ्यो व्यवहरति ।
८० सङ्ख्यादेश्चार्हदलुचः ।
८१ गोदानादीनां ब्रह्मचर्ये ।
८२ चन्द्रायणं च चरति ।
८३ देवव्रतादीन् डिन् ।
८४ डकश्चाष्टाचत्वारिंशतं वर्षाणाम् ।
८५ चातुर्मास्यन्तौ यलुक् च ।
८६ क्रोशयोजनपूर्वाच्छता-

घोजनाच्चाऽभिगमार्हे ।
८७ तद्यात्येभ्यः ।
८८ पथ इकट् ।
८९ नित्यं णः पन्थश्च ।
९० शङ्कूत्तरकान्ताराजवारिस्थलजङ्गलादेस्तेनाहृते च ।
९१ स्थलादेर्मधुकमरिचेऽण् ।
९२ तुरायणपारायणं यजमानाऽधीयाने ।
९३ संशयं प्राप्ते ज्ञेये ।
९४ तस्मै योगादेः शक्ते ।
९५ योगकर्मभ्यां योकञौ ।
९६ यज्ञानां दक्षिणायाम् ।
९७ तेषु देये ।
९८ काले कार्ये च भववत् ।
९९ व्युष्टादिष्वण् ।
१०० यथाकथाचाण्णः ।
१०१ तेन हस्ताद्यः ।
१०२ शोभमाने ।
१०३ कर्मवेषाद्यः ।
१०४ कालात्परिजय्यलभ्यकार्यसुकरे ।
१०५ निर्वृत्ते ।
१०६ तं भाविभूते ।
१०७ तस्मै भृताऽधीष्टे च ।
१०८ षण्मासादवयसि ण्येकौ ।
१०९ समाया ईनः ।
११० रात्र्यहःसंवत्सराच्च द्विगोर्वा ।
१११ वर्षादश्च वा ।

११२ प्राणिनि भूते ।

११३ मासाद्वयसि यः ।

११४ ईनञ्च ।

११५ षण्मासाद्ययणिकण् ।

११६ सोऽस्य ब्रह्मचर्यतद्वतोः ।

११७ प्रयोजनम् ।

११८ एकागाराच्चौरे ।

११९ चूडादिभ्योऽण् ।

१२० विशाखाषाढान्मन्थदण्डे ।

१२१ उत्थापनादेरीयः ।

१२२ विशिरुहिपदिपूरिसमापेरनात्सपूर्वपदात् ।

१२३ स्वर्गस्वस्तिवाचनादिभ्यो यलुपौ ।

१२४ समयात्प्राप्तः ।

१२५ ऋत्वादिभ्योऽण् ।

१२६ कालाद्यः ।

१२७ दीर्घः ।

१२८ आकालिकमिकश्चाद्यन्ते ।

१२९ त्रिंशद्विंशतेर्डकोऽसंज्ञायामार्हदर्थे ।

१३० सङ्ख्याडतेश्चाऽशत्तिष्टेः कः ।

१३१ शतात्केवलादतस्मिन्येकौ ।

१३२ वातोरिकः ।

१३३ कार्षापणादिकट् प्रतिश्चास्य वा ।

१३४ अर्द्धात्पलकंसकर्षात् ।

१३५ कंसार्द्धात्।
१३६ सहस्रशतमानादण्।
१३७ सूर्प्पाद्वाऽञ्।
१३८ वसनात्।
१३९ विंशतिकात्।
१४० द्विगोरीनः।
१४१ अनाम्न्यऽद्विः प्लुप्।
१४२ नवाणः।
१४३ सुवर्णकार्षापणात्।
१४४ द्वित्रिबहोर्निष्कवि-
स्तात्।
१४५ शताद्यः।
१४६ शाणात्।
१४७ द्वित्र्यादेर्याऽण् वा।
१४८ पणपादमाषाद्यः।
१४९ खारीकाकणीभ्यः कच्।
१५० मूल्यैः क्रीते।
१५१ तस्य वापे।
१५२ वातपित्तश्लेष्मसान्नि-
पाताच्छमनकोपने।
१५३ हेतौ संयोगोत्पाते।
१५४ पुत्राद्येयौ।
१५५ द्विस्वरब्रह्मवर्चसाद्यो
ऽसङ्ख्यापरिमाणा-
श्वादेः।
१५६ पृथिवीसर्वभूमेरीश-
ज्ञातयोश्चाञ्।
१५७ लोकसर्वलोकात् ज्ञाते।
१५८ तदत्रास्मै वा वृद्ध्या-
यलाभोपदाशुल्कं दे-
यम्।
१५९ पूरणार्द्धादिकः।

१६० भागाद्येकौ ।

१६१ तं पचतिद्रोणाद्वाऽञ्।

१६२ सम्भवदवहरतोश्च ।

१६३ पात्राचिताढकादीनो वा ।

१६४ द्विगोरीनेकटौ वा ।

१६५ कुलिजाद्वा लुप् च ।

१६६ वंशादेर्भाराद्धरद्वहद्वा-वहत्सु ।

१६७ द्रव्यवस्नात्केकम् ।

१६८ सोऽस्य भृतिवस्नांशम् ।

१६९ मानम् ।

१७० जीवितस्य सन् ।

१७१ सङ्ख्यायाः संघसूत्र-पाठे ।

१७२ नाम्नि ।

१७३ विंशत्यादयः ।

१७४ त्रैंशचात्वारिंशम् ।

१७५ पञ्चद्दशद्वर्गे वा ।

१७६ स्तोमे डट् ।

१७७ तमर्हति ।

१७८ दण्डादेर्यः ।

१७९ यज्ञादियः ।

१८० पात्रात्तौ ।

१८१ दक्षिणाकडङ्गरस्था-लीबिलादीययौ ।

१८२ छेदादेर्नित्यम् ।

१८३ विरागाद्विरङ्गश्च ।

१८४ शीर्षच्छेदाद्यो वा ।

१८५ शालीनकौपीनार्त्वि-जीनम् ।

# सप्तमोऽध्यायः ।

## प्रथमः पादः ।

१ यः ।

२ वहति रथयुगप्रासङ्गात् ।

३ धुरो यैयण् ।

४ वामाद्यादेरीनः ।

५ अश्वैकादेः ।

६ हलसीरादिकण् ।

७ शकटादण् ।

८ विध्यत्यऽनन्येन ।

९ धनगणाल्लब्धरि ।

१० णोऽन्नात् ।

११ हृद्यपद्यतुल्यमूल्यवश्यपथ्यवयस्यधेनुष्यागार्हपत्यजन्यधर्म्यम् ।

१२ नौविषेण तार्यवध्ये ।

१३ न्यायार्थादनपेते ।

१४ मतमदस्य करणे ।

१५ तत्र साधौ ।

१६ पथ्यतिथिवसतिस्वपतेरेयण् ।

१७ भक्ताण्णः ।

१८ पर्षदो ण्यणौ ।

१९ सर्वजनाण्ण्येनञौ ।

२० प्रतिजनादेरीनञ् ।

२१ कथादेरिकण् ।

२२ देवतान्तात्तदर्थे ।

२३ पाद्यार्घ्ये ।

२४ ण्योऽतिथेः ।

२५ सादेश्चातदः ।

२६ हलस्य कर्षे ।

२७ सीतया संगते ।
२८ ईयः ।
२९ हविरन्नभेदापूपादेर्यो वा।
३० उवर्णयुगादेर्यः ।
३१ नाभेर्नभ्चाऽदेहांशात् ।
३२ न्चोधसः ।
३३ शुनो वश्चोदूत् ।
३४ कम्बलान्नाम्नि ।
३५ तस्मै हिते ।
३६ न राजाचार्यब्राह्मण-
वृष्णः ।
३७ प्राण्यङ्गरथखलतिलयव-
वृषब्रह्ममाषाद्यः ।
३८ अव्यजात् थ्यप् ।
३९ चरकमाणवादीनञ् ।
४० भोगोत्तरपदात्मभ्या-
मीनः ।
४१ पञ्चसर्वविश्वाज्जनात्क-
र्मधारये ।
४२ महत्सर्वादिकण् ।
४३ सर्वाण्णो वा ।
४४ परिणामिनि तदर्थे ।
४५ चर्मण्यञ् ।
४६ ऋषभोपानहाञ्ञ्यः ।
४७ छदिर्बलेरेयण् ।
४८ परिखाऽस्य स्यात् ।
४९ अत्र च ।
५० तद् ।
५१ तस्यार्हे क्रियायां वत् ।
५२ स्यादेरिवे ।
५३ तत्र ।
५४ तस्य ।

५५ भावे त्वतल् ।

५६ प्राक्त्वादगड्डुलादेः ।

५७ नञ्तत्पुरुषादबुधादेः ।

५८ पृथ्वादेरिमन्वा ।

५९ वर्णदृढादिभ्यष्ट्यण् च वा ।

६० पतिराजान्तगुणाङ्गराजादिभ्यः कर्म्मणि च ।

६१ अर्हतस्तो न्त् च ।

६२ सहायाद्वा ।

६३ सखिवणिग्दूताद्यः ।

६४ स्तेनान्नलुक्च ।

६५ कपिज्ञातेरेयण् ।

६६ प्राणिजातिवयोऽर्थादञ् ।

६७ युवादेरण् ।

६८ हायनान्तात् ।

६९ य्वृवर्णाल्लघ्वादेः ।

७० पुरुषहृदयादसमासे ।

७१ श्रोत्रियाद्यलुक्च ।

७२ योपान्त्याद् गुरूपोत्तमादसुप्रख्यादकञ् ।

७३ चोरादेः ।

७४ द्वन्द्वाल्लित् ।

७५ गोत्रचरणात् श्लाघात्याकारप्राप्त्यवगमे ।

७६ होत्राभ्य ईयः ।

७७ ब्रह्मणस्त्वः ।

७८ शाकटशाकिनौ क्षेत्रे ।

७९ धान्येभ्य ईनञ् ।

८० व्रीहिशालेरेयण् ।

८१ यवयवकषष्टिकाद्यः ।

८२ वाणुमाषात् ।

८३ वोमाभङ्गातिलात् ।
८४ अलाब्वाश्च कटो रजसि ।
८५ अह्लागम्येऽश्वादीनञ् ।
८६ कुलाज्जल्पे ।
८७ पील्वादेः कुणः पाके ।
८८ कर्णादेर्मूले जाहः ।
८९ पक्षात्तिः ।
९० हिमादेलुः सहे ।
९१ बलवातादूलः ।
९२ शीतोष्णतृप्रादालुरसहे ।
९३ यथामुखसंमुखादीनस्तद्दृश्यते ऽस्मिन् ।
९४ सर्वादेः पथ्यंगकर्मपत्रपात्रशरावं व्याप्नोति ।
९५ आप्रपदम् ।
९६ अनुपदं बद्धा ।
९७ अयानयं नेयः ।
९८ सर्वान्नमत्ति ।
९९ परोवरीणपरंपरीणपुत्रपौत्रीणम् ।
१०० यथाकामानुकामात्यन्तं गामिनि ।
१०१ पारावारं व्यस्तव्यत्यस्तं च ।
१०२ अनुग्वलम् ।
१०३ अध्वानं येनौ ।
१०४ अभ्यमित्रमीयश्च ।
१०५ समांसमीनाद्यश्वीनाद्यप्रातीनाऽऽगवीनसाप्तपदीनम् ।
१०६ अषडक्षाशितंग्वलङ्कर्मालंपुरुषादीनः ।

१०७ अदिक्स्त्रियां वाञ्चः।

१०८ तस्य तुल्ये कः संज्ञा-
प्रतिकृत्योः ।

१०९ न नृपूजार्थध्वजचित्रे।

११० अपण्ये जीवने ।

१११ देवपथादिभ्यः ।

११२ बस्तेरेयञ् ।

११३ शिलाया एयच्च ।

११४ शाखादेर्यः ।

११५ द्रोर्भव्ये ।

११६ कुशाग्रादीयः ।

११७ काकतालीयादयः ।

११८ शर्करादेरण् ।

११९ अः सपत्न्याः ।

१२० एकशालाया इकः।

१२१ गोण्यादेश्चेकण् ।

१२२ कर्कलोहिताट्टीकण् च।

१२३ वेर्विस्तृते शालशङ्कटौ।

१२४ कटः ।

१२५ संप्रोन्नेः संकीर्णप्रका-
शाधिकसमीपे ।

१२६ अवात्कुटारश्चावनते।

१२७ नासानतितद्वतोष्टीट-
नाटभ्रटम् ।

१२८ नेरिनापिटकाश्चिक्चि-
चिकश्चास्य ।

१२९ विडविरीसौ नीरन्ध्रे च।

१३० क्लिन्नाल्लश्चक्षुषि चिल्-
पिल्चुल् चास्य ।

१३१ उपत्यकाधित्यके ।

१३२ अवेस्संघातविस्तारे-
कटपटम् ।

१३३ पशुभ्यः स्थाने गोष्ठः।

१३४ द्वित्वे गोयुगः ।

१३५ षट्त्वे षड्गवः ।

१३६ तिलादिभ्यः स्नेहे तैलः।

१३७ तत्र घटते कर्म्मणष्ठः।

१३८ तदस्य सञ्जातं तारकादिभ्य इतः ।

१३९ गर्भादप्राणिनि ।

१४० प्रमाणान्मात्रट् ।

१४१ हस्तिपुरुषाद्वाण् ।

१४२ वोर्द्ध्वं दघ्नट्द्वयसट् ।

१४३ मानादसंशये लुप् ।

१४४ द्विगोः संशये च ।

१४५ मात्रट् ।

१४६ शन्शद्विंशतेः ।

१४७ डिन् ।

१४८ इदं किमोऽतुरियकियू चास्य ।

१४९ यत्तदेतदोर्डावादिः ।

१५० यत्तत्किमः सङ्ख्याया डतिर्वा ।

१५१ अवयवात्तयट् ।

१५२ द्वित्रिभ्यामयट् वा ।

१५३ द्व्यादेर्गुणान्मूल्यक्रेये मयट् ।

१५४ अधिकं तत्सङ्ख्यमस्मिन् शतसहस्रे शतिशद्दशान्ताया डः ।

१५५ सङ्ख्यापूरणे डट् ।

१५६ विंशत्यादेर्वा तमट् ।

१५७ शतादिमासार्द्धमाससंवत्सरात् ।

१५८ षष्ठ्यादेरसङ्ख्यादेः।

१५९ नो मट्।

१६० पित्तिथट् बहुगणपूग-सङ्घात्।

१६१ अतोरिथट्।

१६२ षट्कतिकतिपयात् थट्।

१६३ चतुरः।

१६४ येयौ चलुक् च।

१६५ द्वेस्तीयः।

१६६ त्रेस्तृ च।

१६७ पूर्वमनेन सादेश्चेन्।

१६८ इष्टादेः।

१६९ श्राद्धमद्यभुक्तमिकेनौ।

१७० अनुपद्यन्वेष्टा।

१७१ दाण्डाजिनिकायः-शूलिकपार्श्वकम्।

१७२ क्षेत्रेऽन्यस्मिन्नाश्ये इयः

१७३ छन्दोऽधीते श्रोत्रश्च वा।

१७४ इन्द्रियम्।

१७५ तेन वित्ते चञ्चुचणौ।

१७६ पूरणाद्ग्रन्थस्य ग्राहके को लुक्चाऽस्य।

१७७ ग्रहणाद्वा।

१७८ सस्याद् गुणात्परिजाते।

१७९ धनहिरण्ये कामे।

१८० स्वाङ्गेषु सक्ते।

१८१ उदरेत्विकणाद्यूने।

१८२ अंशं हारिणि।

१८३ तन्त्रादचिरोद्धृते।

१८४ ब्राह्मणान्नाम्नि।

१८५ उष्णात् ।
१८६ शीताच्च कारिणि ।
१८७ अधेरारूढे ।
१८८ अनोः कमितरि ।
१८९ अभेरीश्च वा ।
१९० सोऽस्य मुख्यः ।
१९१ शृङ्खलकः करभे ।
१९२ उदुत्सोरुन्मनसि ।
१९३ कालहेतुफलाद्रोगे ।
१९४ प्रायोऽन्नमस्मिन्नाम्नि ।
१९५ कुल्माषादण् ।
१९६ वटकादिन् ।
१९७ साक्षाद् द्रष्टा ।

---

द्वितीयः पादः ।

१ तदस्याऽस्त्यस्मिन्निति मतुः ।
२ आयात् ।
३ नावादेरिकः ।
४ शिखादिभ्य इन् ।
५ व्रीह्यादिभ्यस्तौ ।
६ अतोऽनेकस्वरात् ।
७ अशिरसोऽशीर्षश्च ।
८ अर्थार्थान्ताद्भावात् ।
९ व्रीह्यर्थतुन्दादेरिलश्च ।
१० स्वाङ्गाद्विवृद्धात्ते ।
११ वृन्दादारकः ।
१२ शृङ्गात् ।
१३ फलबर्हाच्चेनः ।
१४ मलादीमसश्च ।
१५ मरुत्पर्वणस्तः ।
१६ वलिवाटितुण्डेर्भः ।
१७ ऊर्णाऽहंशुभमो युस् ।

१८ कंशंभ्यां युस्तियस्तुतबभम् ।

१९ बलवातदन्तललाटादूलः ।

२० प्राण्यङ्गादातो लः ।

२१ सिध्मादिक्षुद्रजन्तुरुग्भ्यः

२२ प्रज्ञापर्णोदकफेनाल्लेलौ ।

२३ कालाजटाघाटात् क्षेपे ।

२४ वाच आलाटौ ।

२५ ग्मिन् ।

२६ मध्वादिभ्यो रः ।

२७ कृष्यादिभ्यो बलच् ।

२८ लोमपिच्छादेः शेलम् ।

२९ नोऽङ्गादेः ।

३० शाकीपलालीदद्र्वा ह्रस्वश्च

३१ विष्वचो विषुश्च ।

३२ लक्ष्म्या अनः ।

३३ प्रज्ञाश्रद्धार्चावृत्तेर्णः ।

३४ ज्योत्स्नादिभ्योऽण् ।

३५ सिकताशर्करात् ।

३६ इलश्च देशे ।

३७ द्युद्रोर्म्मः ।

३८ काण्डाण्डभाण्डादीरः ।

३९ कच्छ्वा डुरः ।

४० दन्तादुन्नतात् ।

४१ मेधारथान्नवेरः ।

४२ कृपाहृदयादालुः ।

४३ केशाद्वः ।

४४ मण्यादिभ्यः ।

४५ हीनात्स्वाङ्गादः ।

४६ अभ्रादिभ्यः ।

४७ अस्तपोमायामेधास्रजो

विन् ।

४८ आमयाद्दीर्घश्च ।

४९ स्वान्मिन्नीशे ।

५० गोः ।

५१ ऊर्जो विन्वलावस्चान्तः

५२ तमिस्रार्णवज्योत्स्नाः ।

५३ गुणादिभ्यो यः ।

५४ रूपात्प्रशस्ताहतात् ।

५५ पूर्णमासोऽण् ।

५६ गोपूर्वादत इकण् ।

५७ निष्कादेः शतसहस्रात् ।

५८ एकादेः कर्मधारयात् ।

५९ सर्वादेरिन् ।

६० प्राणिस्थादस्वाङ्गाद्द्वन्द्व-
रुग्निन्द्यात् ।

६१ वातातीसारपिशाचात्क-

श्चान्तः ।

६२ पूरणाद्वयसि ।

६३ सुखादेः ।

६४ मालायाः क्षेपे ।

६५ धर्म्मशीलवर्णान्तात् ।

६६ बाहूर्वादेर्बलात् ।

६७ मन्माब्जादेर्नाम्नि ।

६८ हस्तदन्तकराज्जातौ ।

६९ वर्णाद्ब्रह्मचारिणि ।

७० पुष्करादेर्देशे ।

७१ सूक्तसाम्नोरीयः ।

७२ लुब्वाऽध्यायानुवाके ।

७३ विमुक्तादेरण् ।

७४ घोषदादेरकः ।

७५ प्रकारे जातीयर् ।

७६ कोऽण्वादेः ।

७७ जीर्णगोमूत्रावदातसुरा-
यवकृष्णाच्छाल्याच्छा-
दनसुराहिव्रीहितिले ।
७८ भूतपूर्वे प्चरट् ।
७९ गोष्ठादीनञ् ।
८० षष्ठ्या रूप्यप्चरट् ।
८१ व्याश्रये तसुः ।
८२ रोगात्प्रतीकारे ।
८३ पर्यभेः सर्वोभये ।
८४ आद्यादिभ्यः ।
८५ क्षेपातिग्रहाव्यथेष्वकर्तु-
स्तृतीयायाः ।
८६ पापहीयमानेन ।
८७ प्रतिना पञ्चम्याः ।
८८ अहीयरुहोऽपादाने ।
८९ किमद्व्यादिसर्वाद्यऽवैपु-
ल्यबहोः पित् तस् ।
९० इतोऽतः कुतः ।
९१ भवत्वायुष्मद्दीर्घायुर्देवा-
नांप्रियैकार्थात् ।
९२ त्रप्च ।
९३ ककुत्रात्रेह ।
९४ सप्तम्याः ।
९५ किंयत्तत्सर्वैकान्यात्का-
ले दा ।
९६ सदाऽधुनेदानींतदानी-
मेतर्हि ।
९७ सद्योऽद्यपरेद्यव्यह्नि ।
९८ पूर्वापराधरोत्तरान्यान्य-
तरेतरादेद्युस् ।
९९ उभयाद् द्युश्च ।
१०० ऐषमःपरुत्परारि वर्षे ।
१०१ अनद्यतने र्हिः ।

१०२ प्रकारे था ।

१०३ कथमित्थम् ।

१०४ सङ्ख्याया धा ।

१०५ विचाले च ।

१०६ वैकाद्ध्यमञ् ।

१०७ द्वित्रेर्द्धमञेधौ वा ।

१०८ तद्वति धण् ।

१०९ वारे कृत्वस् ।

११० द्वित्रिचतुरः सुच् ।

१११ एकात्सकृच्चास्य ।

११२ बहोर्धासन्ने ।

११३ दिक्शब्दाद्दिग्देश-
कालेषु प्रथमापञ्चमी-
सप्तम्याः ।

११४ ऊर्ध्वाद्रिरिष्टातावुप-
श्चास्य ।

११५ पूर्वावराधरेभ्योऽसऽ-
स्तातौ पुरवधश्चैषाम् ।

११६ परावरात्स्तात् ।

११७ दक्षिणोत्तराच्चातस् ।

११८ अधरापराच्चात् ।

११९ वा दक्षिणात् प्रथमा-
सप्तम्या आः ।

१२० आही दूरे ।

१२१ वोत्तरात् ।

१२२ अदूरे एनः ।

१२३ लुबञ्चेः ।

१२४ पश्चोऽपरस्य दिक्पूर्व-
स्य चाति ।

१२५ वोत्तरपदेऽर्द्धे ।

१२६ कृभ्वस्तिभ्यां कर्मकर्तृ-
भ्यां प्रागतत्तत्त्वे च्विः ।

१२७ अरुर्मनश्चक्षुश्चेतोर-
होरजसां लुक् च्वौ।
१२८ इसुसोर्बहुलम्।
१२९ व्यञ्जनस्यान्त ईः।
१३० व्याप्तौ स्सात्।
१३१ जातेः सम्पदा च।
१३२ तत्राधीने।
१३३ देये त्रा च।
१३४ सप्तमीद्वितीयाद्देवा-
दिभ्यः।
१३५ तीयशम्बबीजात्कृगा
कृषौ डाच्।
१३६ सङ्ख्यादेर्गुणात्।
१३७ समयाद्यापनायाम्।
१३८ सपत्रनिष्पत्रादातिव्य-
थने।

१३९ निष्कुलान्निष्कोषणे।
१४० प्रियसुखादानुकूल्ये।
१४१ दुःखात्प्रातिकूल्ये।
१४२ शूलात्पाके।
१४३ सत्यादशपथे।
१४४ मद्रभद्राद्वपने।
१४५ अव्यक्ताऽनुकरणाद-
नेकस्वरात्कृभ्वस्तिना
अनितौ द्विश्च।
१४६ इतावतो लुक्।
१४७ न द्वित्वे।
१४८ तो वा।
१४९ डाच्यादौ।
१५० बह्वल्पार्थात्कारकादि-
ष्टानिष्टे प्शस्।
१५१ संख्यैकार्थाद्वीप्सायां

शस् ।

१५२ सङ्ख्यादेः पादादिभ्यो दानदण्डे चाकल्लुक् च ।

१५३ तीयाट्टीकण् न विद्या चेत् ।

१५४ निष्फले तिलात्पिञ्जपेजौ ।

१५५ प्रायोऽतोर्द्दयसट्मात्रट् ।

१५६ वर्णाऽव्ययात् स्वरूपे कारः ।

१५७ रादेफः ।

१५८ नामरूपभागाद्धेयः ।

१५९ मर्त्तादिभ्यो यः ।

१६० नवादीनतनत्नं च नू चास्य ।

१६१ प्रात्पुराणे नश्च ।

१६२ देवात्तल् ।

१६३ होत्राया ईयः ।

१६४ भेषजादिभ्यष्ट्यण् ।

१६५ प्रज्ञादिभ्योऽण् ।

१६६ श्रोत्रौषधिकृष्णाच्छरीरभेषजमृगे ।

१६७ कर्म्मणः सन्दिष्टे ।

१६८ वाच इकण् ।

१६९ विनयादिभ्यः ।

१७० उपायाद् ह्रस्वश्च ।

१७१ मृदस्तिकः ।

१७२ सस्नौ प्रशस्ते ।

---

तृतीयः पादः ।

१ प्रकृते मयट् ।

२ अस्मिन् ।

३ तयोः समूहवच्च बहुषु ।
४ निन्द्ये पाशप् ।
५ प्रकृष्टे तमप् ।
६ द्वयोर्विभज्ये च तरप् ।
७ क्वचित्स्वार्थे ।
८ किन्त्याद्येऽव्ययादसत्वे
तयोरन्तस्याम् ।
९ गुणाङ्गाद्वेष्ठेयसू ।
१० त्यादेश्च प्रशस्ते रूपप् ।
११ अतमबादेरीषदसमासे
कल्पप्देश्यप्देशीयर् ।
१२ नाम्नः प्राग् बहुर्वा ।
१३ न तमबादिः कपोऽच्छि-
न्नादिभ्यः ।
१४ अनत्यन्ते ।
१५ यावादिभ्यः कः ।
१६ कुमारीक्रीडनेयसोः ।
१७ लोहितान्मणौ ।
१८ रक्ताऽनित्यवर्णयोः ।
१९ कालात् ।
२० शीतोष्णादृतौ ।
२१ लूनवियातात्पशौ ।
२२ स्नाताद्वेदसमाप्तौ ।
२३ तनुपुत्राणुबृहतीशून्या-
त्सूत्रकृत्रिमनिपुणाच्छा-
दनरिक्ते ।
२४ भागेऽष्टमाञ्ञः ।
२५ षष्ठात् ।
२६ माने कश्च ।
२७ एकादाकिन् चासहाये ।
२८ प्रागनित्यात्कप् ।
२९ त्यादिसर्वादेः स्वरेष्व-

न्यात्पूर्वोऽक् ।

३० युष्मदस्मदोऽसोभादिस्यादेः ।

३१ अव्ययस्य को द् च ।

३२ तूष्णीकाम् ।

३३ कुत्सिताल्पाज्ञाते ।

३४ अनुकम्पातद्युक्तनीत्योः ।

३५ अजातेर्नृनाम्नो बहुस्वरादियेकेलं वा ।

३६ वोपादेरडाकौ च ।

३७ ऋवर्णोवर्णात्स्वरादेरादेर्लुक् प्रकृत्या च ।

३८ लुक्युत्तरपदस्य कप्न ।

३९ लुक्चाऽजिनान्तात् ।

४० षड्वर्जैकस्वरपूर्वपदस्य स्वरे ।

४१ द्वितीयात्स्वरादूर्ध्वम् ।

४२ सन्ध्यक्षरात्तेन ।

४३ शेवलाद्यादेस्तृतीयात् ।

४४ क्वचित्तुर्यात् ।

४५ पूर्वपदस्य वा ।

४६ ह्रस्वे ।

४७ कुटीशुण्डाद्रः ।

४८ शम्या रुरौ ।

४९ कुत्वा डुपः ।

५० कासूगोणीभ्यां तरट् ।

५१ वत्सोक्षाश्वर्षभाद् ह्रासे पित् ।

५२ वैकाद्द्वयोर्निर्धार्ये डतरः ।

५३ यत्तत्किमन्यात् ।

५४ बहूनां प्रश्ने डतमश्च वा ।

५५ वैकात् ।

५६ क्तान्तमब्रादेश्चानत्यन्ते।
५७ न सामिवचने ।
५८ नित्यं ञञिनोऽण्।
५९ विसारिणो मत्स्ये ।
६० पूगादमुख्यकाञ्ज्यो द्रिः।
६१ व्रातादस्त्रियाम् ।
६२ शस्त्रजीविसंघाञ्ज्यड् वा ।
६३ वाहीकेष्वब्राह्मणराजन्येभ्यः ।
६४ वृकाट्टेण्यण् ।
६५ यौधेयादेरञ् ।
६६ पर्श्वादेरण् ।
६७ दामन्यादेरीयः ।
६८ श्रुमच्छमीवच्छिखावच्छालावदूर्णावद्विदभृदभिजितो गोत्रेऽणो यञ् ।
६९ समासान्तः ।
७० न किमः क्षेपे ।
७१ नञ्तत्पुरुषात् ।
७२ पूजास्वतेः प्राक्टात् ।
७३ बहोर्डः ।
७४ इच् युद्धे ।
७५ द्विदण्ड्यादिः ।
७६ ऋक्पूः पथ्यपोऽत् ।
७७ धुरोऽनक्षस्य ।
७८ सङ्ख्यापाण्डूदक्कृष्णाद्भूमेः ।
७९ उपसर्गादध्वनः ।
८० समवान्धात्तमसः ।
८१ ततान्ववाद्रहसः ।

८२ प्रत्यन्ववात्सामलोम्नः ।
८३ ब्रह्महस्तिराजपल्याद्वर्चसः ।
८४ प्रतेरुरसः सप्तम्याः ।
८५ अक्ष्णोऽप्राण्यङ्गे ।
८६ सङ्कटाभ्याम् ।
८७ प्रतिपरोनोरव्ययीभावात् ।
८८ अनः ।
८९ नपुंसकाद्वा ।
९० गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा ।
९१ संख्याया नदीगोदावरीभ्याम् ।
९२ शरदादेः ।
९३ जराया जरस् च ।
९४ सरजसोपशुनानुगवम् ।
९५ जातमहद्वृद्धादुक्ष्णः कर्मधारयात् ।
९६ स्त्रियाः पुंसो द्वन्द्वाच्च ।
९७ ऋक्सामर्ग्यजुषधेन्वनडुहवाङ्मनसाऽहोरात्ररात्रिंदिवनक्तंदिवाऽहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम् ।
९८ चवर्गदषहः समाहारे ।
९९ द्विगोरन्नह्नोऽट् ।
१०० द्वित्रेरायुषः ।
१०१ वाञ्जलेरलुकः ।
१०२ खार्या वा ।
१०३ वार्द्धाच्च ।
१०४ नावः ।

१०५ गोस्तत्पुरुषात् ।

१०६ राजन्सखेः ।

१०७ राष्ट्राख्याद्ब्रह्मणः ।

१०८ कुमहद्भ्यां वा ।

१०९ ग्रामकौटात्तक्ष्णः ।

११० गोष्ठातेः शुनः ।

१११ प्राणिन उपमानात् ।

११२ अप्राणिनि ।

११३ पूर्वोत्तरमृगाच्च सक्थ्नः ।

११४ उरसोऽग्रे ।

११५ सरोऽनोऽश्माऽयसो जातिनाम्नोः ।

११६ अह्नः ।

११७ सङ्ख्यातादह्नश्च वा ।

११८ सर्वांशसङ्ख्याऽव्ययात् ।

११९ सङ्ख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत् ।

१२० पुरुषायुषद्विस्तावत्रिस्तावम् ।

१२१ श्वसो वसीयसः ।

१२२ निसश्च श्रेयसः ।

१२३ नञऽव्ययात्सङ्ख्याया डः ।

१२४ सङ्ख्याऽव्ययादङ्गुलेः ।

१२५ बहुव्रीहेः काष्ठे टः ।

१२६ सक्थ्यऽक्ष्णः स्वाङ्गे ।

१२७ द्वित्रेर्मूर्ध्नो वा ।

१२८ प्रमाणीसङ्ख्याड्डः ।

१२९ सुप्रातसुश्वसुदिवशारिकुक्षचतुरस्रैणीपदा-

ऽजपदप्रोष्ठपदभद्रपदम् ।
१३० पूरणीभ्यस्तत्प्राधान्येऽप् ।
१३१ नञ्सुव्युपत्रेश्चतुरः ।
१३२ अन्तर्बहिर्भ्यां लोम्नः ।
१३३ भान्नेतुः ।
१३४ नाभेर्नाम्नि ।
१३५ नञ्बहोर्ऋचो माणवचरणे ।
१३६ नञ्सुदुर्भ्यः सक्तिसक्थिहलेर्वा ।
१३७ प्रजाया अस् ।
१३८ मन्दाल्पाच्च मेधायाः ।
१३९ जातेरीयः सामान्यवति ।
१४० भृतिप्रत्ययान्मासादिकः ।
१४१ द्विपदाद्धर्मादन् ।
१४२ सुहरिततृणसोमाज्जम्भात् ।
१४३ दक्षिणेर्मा व्याधयोगे ।
१४४ सुपूत्युत्सुरभेर्गन्धादिद्गुणे ।
१४५ वागन्तौ ।
१४६ वाल्पे ।
१४७ वोपमानात् ।
१४८ पात्पादस्याहस्त्यादेः ।
१४९ कुम्भपद्यादिः ।
१५० सुसङ्ख्यात् ।
१५१ वयसि दन्तस्य दतृः ।
१५२ स्त्रियां नाम्नि ।

१५३ श्यावारोकाद्वा ।
१५४ वाग्रान्तशुद्धशुभ्रवृष-
वराहाहिमूषिकाशिख-
रात् ।
१५५ संप्राज्जानोर्ज्ञुज्ञौ ।
१५६ वोर्ध्वात् ।
१५७ सुहृद्दुर्हृन्‌मित्रामित्रे ।
१५८ धनुषो धन्वन् ।
१५९ वा नाम्नि ।
१६० खरखुरान्नासिकाया
नस् ।
१६१ अस्थूलाच्च नसः ।
१६२ उपसर्गात् ।
१६३ वेः खुख्रग्रम् ।
२६४ जायाया जानिः ।
१६५ व्युदः काकुदस्य लुक् ।
१६६ पूर्णाद्वा ।
१६७ ककुदस्यावस्थायाम् ।
१६८ त्रिककुद् गिरौ ।
१६९ स्त्रियामूधसो न् ।
१७० इनः कच् ।
१७१ ऋन्नित्यदितः ।
१७२ दध्यूरःसर्पिर्मधूपान-
च्छालेः ।
१७३ पुमनडुन्नौपयोलक्ष्म्या
एकत्वे ।
१७४ नञोऽर्थात् ।
१७५ शेषाद्वा ।
१७६ न नाम्नि ।
१७७ ईयसोः ।
१७८ सहात्तुल्ययोगे ।
१७९ भ्रातुः स्तुतौ ।

१८० नाडीतन्त्रीभ्यां स्वाङ्गे ।

१८१ निष्प्रवाणिः ।

१८२ सुभ्रादिभ्यः ।

---

चतुर्थः पादः ।

१ वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते ।

२ केकयमित्रयुप्रलयस्य यादेरिय् च ।

३ देविकाशिंशपादीर्घसत्त्र-श्रेयसस्तत्प्राप्तावाः ।

४ वहीनरस्यैत् ।

५ य्वः पदान्तात्प्रागैदौत् ।

६ द्वारादेः ।

७ न्यग्रोधस्य केवलस्य ।

८ न्यङ्कोर्वा ।

९ न ञस्वाङ्गादेः ।

१० श्वादेरिति ।

११ इञः ।

१२ पदस्यानिति वा ।

१३ प्रोष्ठभद्राज्जाते ।

१४ अंशादृतोः ।

१५ सुसर्वार्द्धाद्राष्ट्रस्य ।

१६ अमद्रस्य दिशः ।

१७ प्राग्ग्रामाणाम् ।

१८ सङ्ख्याधिकाभ्यां वर्ष-स्याभाविनि ।

१९ मानसंवत्सरस्याशाण-कुलिजस्यानाम्नि ।

२० अर्द्धात्परिमाणस्यानतो-वाऽऽदेः ।

२१ प्राद्वाहणस्यैये ।

२२ एयस्य ।

२३ नञः क्षेत्रज्ञेश्वरकुशलचपलनिपुणशुचेः ।

२४ जङ्गलधेनुवलजस्योत्तरपदस्य तु वा ।

२५ हृद्भगसिन्धोः ।

२६ प्राचां नगरस्य ।

२७ अनुशतिकादीनाम् ।

२८ देवतानामात्वादौ ।

२९ आतो नेन्द्रवरुणस्य ।

३० सारवैक्ष्वाकमैत्रेयभ्रौणहत्यधैवत्याहिरण्मयम् ।

३१ वान्तमान्तितमान्तितोऽन्तियान्तिषत् ।

३२ विन्मतोर्णीष्ठेयसौ लुप् ।

३३ अल्पयूनोः कन्वा ।

३४ प्रशस्यस्य श्रः ।

३५ वृद्धस्य च ज्यः ।

३६ ज्यायान् ।

३७ बाढान्तिकयोः साधनेदौ ।

३८ प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारकस्येमानि च प्रास्थास्फावरगरवंहत्रपद्राघवर्षवृन्दम् ।

३९ पृथुमृदुभृशकृशदृढपरिवृढस्य ऋतो रः

४० बहोर्णीष्ठे भूय् ।

४१ भूर्लुक्चेवर्णस्य ।

४२ स्थूलदूरयुवह्रस्वाक्षिप्रक्षुद्रस्यान्तस्थादेर्गुणश्च

नामिनः ।

४३ त्र्यन्तस्वरादेः ।

४४ नैकस्वरस्य ।

४५ दण्डिहस्तिनोरायने ।

४६ वाशिन आयनौ ।

४७ एये जिह्माशिनः ।

४८ ईनेऽध्वात्मनोः ।

४९ इकण्यथर्वणः ।

५० यूनोऽके ।

५१ अनोऽट्ये ये ।

५२ अणि ।

५३ संयोगादिनः ।

५४ गाथिविदथिकेशिपाणि-गणिनः ।

५५ अनपत्ये ।

५६ उक्ष्णोर्लुक् ।

५७ ब्रह्मणः ।

५८ जातौ ।

५९ अवर्मणो मनोऽपत्ये ।

६० हितनाम्नो वा ।

६१ नोऽपदस्य तद्धिते ।

६२ कलापिकुथुमितैतलिजा-जलिलाङ्गलिशिखण्डि-शिलालिसब्रह्मचारिपी-ठसर्प्पिसूकरसद्मसुप-र्वणः ।

६३ वाश्मनो विकारे ।

६४ चर्मशुनः कोशसङ्कोचे ।

६५ प्रायोऽव्ययस्य ।

६६ अनीनादट्यह्नोऽतः ।

६७ विंशतेस्तेर्डिति ।

६८ अवर्णेवर्णस्य ।

६९ अकद्रूपाण्ड्वोरुवर्णस्यैये ।
७० अस्वयम्भुवोऽव् ।
७१ ऋवर्णोवर्णदोसिसुसशश्वदकस्मात्त इकस्येतोलुक् ।
७२ असकृत्संभ्रमे ।
७३ भृशाभीक्ष्ण्याविच्छेदे द्विः प्राक्तमबादेः ।
७४ नानावधारणे ।
७५ आधिक्यानुपूर्व्ये ।
७६ डतरडतमौ समानां स्त्रीभावप्रश्ने ।
७७ पूर्वप्रथमावन्यतोऽतिशये ।
७८ प्रोपोत्सम्पादपूरणे ।
७९ सामीप्येऽधोऽध्युपरि ।
८० वीप्सायाम् ।
८१ प्लुप्चादावेकस्य स्यादेः ।
८२ द्वन्द्वं वा ।
८३ रहस्यमर्यादोक्तिव्युत्क्रान्तियज्ञपात्रप्रयोगे ।
८४ लोकज्ञातेऽत्यन्तसाहचर्ये ।
८५ आबाधे ।
८६ नवा गुणः सदृशे रित् ।
८७ प्रियसुखं चाकृच्छ्रे ।
८८ वाक्यस्य परिवर्जने ।
८९ सम्मत्यसूयाकोपकुत्सनेष्वाद्यामन्त्र्यमादौ स्वरेष्वन्त्यश्च प्लुतः ।
९० भर्त्सने पर्यायेण ।
९१ त्यादेः साकाङ्क्षस्या-

ङ्गेन ।

९२ क्षियाशीः प्रैषे ।

९३ चितीवार्थे ।

९४ प्रतिश्रवणनिगृह्यानुयोगे ।

९५ विचारे पूर्वस्य ।

९६ ओमः प्रारम्भे ।

९७ हेः प्रश्नाख्याने ।

९८ प्रश्ने च प्रतिपदम् ।

९९ दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत् ।

१०० हेहैष्वेषामेव ।

१०१ अस्त्रीशूद्रे प्रत्यभिवादे भोगोत्रनाम्नो वा ।

१०२ प्रश्नार्चाविचारे च सन्धेयसन्ध्यक्षरस्यादिदुत्परः ।

१०३ तयोर्य्वौ स्वरे संहितायाम् ।

१०४ पञ्चम्या निर्दिष्टे परस्य ।

१०५ सप्तम्या पूर्वस्य ।

१०६ षष्ठ्याऽन्त्यस्य ।

१०७ अनेकवर्णः सर्वस्य ।

१०८ प्रत्ययस्य ।

१०९ स्थानीवावर्णविधौ ।

११० स्वरस्य परे प्राग्विधौ ।

१११ न सन्धिङीयक्विद्विदीर्घासद्विधावस्क्लुकि ।

११२ लुप्यय्वृल्लेनत् ।

११३ विशेषणमन्तः ।

११४ सप्तम्या आदिः ।

११५ प्रत्ययः प्रकृत्यादेः ।

११६ गौणो ङ्यादिः ।

११७ कुत्सगतिकारकस्यापि ।

११८ परः ।

११९ स्पर्द्धे ।

१२० आसन्नः ।

१२१ सम्बन्धिनां सम्बन्धे ।

१२२ समर्थः पदविधिः ।

इति श्रीहेमचन्द्राचार्यविरचितासिद्धहेम-
शब्दानुशासनसूत्रपाठः समाप्तः ॥






श्रीवीतरागाय नमः ।

# श्रीजैनयशोविजयग्रन्थमाला ।

## अत्यार सुधीमां बहार पडेला ग्रंथोः-

१. श्री प्रमाणनयतत्त्वालोकालंकारः—आ सौथी नानो जैनन्यायनो ग्रंथ श्रीवादिदेवसूरिए बनावेलो छे. ते जैनन्याय-मां प्रवेश करनारने अति जरूरनो छे. किं. आना ८

२. हैमलिंगानुशासनः—अवचूरि साथे. आ ग्रंथ आचार्य श्रीहेमचन्द्रे व्याकरणना दरेक शब्दोना लिंगनुं ज्ञान सहेलाइथी थवा माटे बनाव्यो छे. वली तेनी खूबी ए छे. के ते कविता रूप होवाथी विद्यार्थीने मोढे करवुं बहु सुगम छे. किं. आना ६

३. सिद्धहेमशब्दानुशासनः—लघुवृत्ति तथा धातुपाठ विगेरे साथे. कलिकाल सर्वज्ञ श्रीहेमचन्द्राचार्ये संस्कृत अभ्यासीओना कल्याणने माटे अति सहेलो आ व्याकरणनो ग्रंथ बनावेलो छे. दरेक जैनी भाइए खास करीने जैन व्याकरणना उत्तेजनने वास्ते एक नकल जरूर खरीदवी जोइए.

किं. रु. २॥ हैम लिंगानुशासन भेट.

४. गुर्वावली—आ ग्रन्थ श्री मुनिसुन्दरसूरिए वि. सं. १४६६ मां बनाव्यो छे. तेमां श्रीमहावीरस्वामीथी लइने तपगच्छना दरेक आचार्योनुं चरित्र वर्णवेलुं छे. पवित्र आचार्योनां चरित्रो वांच-वाथी आपणने अपूर्व लाभ मले छे. वली जैन इतिहासने माटे आ सौथी सरस ग्रन्थ छे. किं. आना ८

५. रत्नाकरावतारिका:-पंजिका तथा टिप्पण साथे. बे परिच्छेद. जैन न्यायनी अंदर आ ग्रन्थ बहुज सरस छे. ते वात सरवेना जाणवामां होवाथी वधु लखता नथी. किं. रू. १

६. श्री सिद्धहेमशब्दानुशासन मूल:-जे विद्यार्थिओ एक वखत सिद्धहेमव्याकरण भणी गया होय तेमने फरी याद करी जवामां आ मूल बहु कामनुं छे. किं. आना ४

## छपाता ग्रन्थो:

७. जैन स्तोत्रसंग्रह-आ संग्रहमां प्राचीनजैनस्तोत्रो दाखल कराय छे जे कदी छपायलांज नथी. किं. आना १२

८. क्रियारत्नसमुच्चय:-आ ग्रन्थ श्रीगुणरत्नसूरिनो बनावेलो छे. सिद्धहेमव्याकरणना भणनाराओने आ ग्रन्थ घणोज उपयोगी छे. ( किं. रू. २ पोस्टेज दरेकनुं जूदुं. )

## हवे पछी छपावाना ग्रन्थो।

१. संस्कृत द्व्याश्रयकाव्य टीका सहित।
२. हैमविभ्रमटीका सहित। ३. सुकृतसागरकाव्य।
४. विजयप्रशस्ति काव्य टीका सहित।
५. बृहत् न्यायार्थमञ्जूषा, न्यास सहित।
६. धातुपारायण। ७. हैमलिंगानुशासनटीकासहित।
८. उणादिगणविवरण वृत्तिसाथे।

मलवानुं ठेकाणुं:--

**श्रीयशोविजयजैनपाठशाला।**

मोहल्ला नन्दनसाहु बनारस शहेर।